श्रीनारदमुनिविरचिता सामवेदीया

# नारदीया शिक्षा





भट्टशोभाकरविरचिता
'शिक्षाविवरणोपेता' टीकासहिता



प्रकाशकः—

श्रीपीताम्बरापीठ-संस्कृत-परिषद्
दतिया (म० प्र०)

श्रीनारदमुनिविरचिता सामवेदीया

# नारदीया शिक्षा

✤

भट्टशोभाकरविरचिता

'शिक्षाविवरणोपेता' टीकासहिता

✤

प्रकाशकः—

श्रीपीताम्बरापीठ-संस्कृत-परिषद्

दतिया (म० प्र०)

| | |
|---|---|
| प्रकाशक | श्रीपीताम्बरापीठ-संस्कृत-परिषद्<br>वनखण्डेश्वर, दतिया (म० प्र०) |
| अधिकार | सर्वाधिकार प्रकाशकाधीन |
| आवृत्ति | द्वितीय–२०४७ |
| मूल्य | छः रुपिया सिर्फ |
| मुद्रक | शिवशक्ति प्रेस, प्रा. लि.<br>वैद्यनाथ भवन, नागपुर–९ |

## समर्पणम्



यः कारुण्याज्जीवलोकं शिक्षयन् क्षेमवर्त्म सत् ।
सुदारुणं हरन्नास्ते सतां तस्मै कृपालवे ।।



दतिया–वनखण्डीस्थ–सिद्धपीठविहारिणे ।
सिद्धाय-सिद्धपूज्याय-सिद्धिदात्रे सुधागिरे ।।



पीताम्बरापादपद्म–मकरन्दलिहे इयम् ।
देशिकेन्द्र स्वामिपाद-भ्रमराय समर्प्यते ।।

––मीमांसाचार्यः श्रीगोपालचन्द्र मिश्रः एम. ए.



ब्रह्मलीन
श्री पीताम्बरा पीठाधीश्वर राष्ट्रगुरु परमपूज्य श्री १००८ श्री स्वामी जी महाराज, वनखण्डेश्वर, दतिया (म० प्र०)

# प्रकाशकीयं किंचित्



श्रीपीताम्बरापीठसंस्थापकानां परिव्राजकचक्रचूडामणीनामनन्तश्री विभूषितानां श्रीस्वामिपादानामनुग्रहेणास्मिन् वर्ष एव योगशास्त्रस्य महतीं निधि सटीकं "घेरण्ड संहिता" नामकं ग्रन्थं तथा च श्री चरणानां शोधपूर्णसाधनाया मूर्तफलं "श्री बगलारहस्यम्" महततन्त्रं प्रकाश्य श्री शोभाकरभट्टकृतभाष्यभूषितां श्रीनारदीयसामवेदशिक्षां प्रकाशयितु-मुद्यतैषा परिषदद्य परमांनन्दमनुभवति ।

प्रसिद्धसंस्कृतेतिहासलेखकै "विन्टरनित्ज प्रभृतिभिः पाश्चात्य विद्वद्भि" ग्रन्थस्यास्य नाम ज्ञानेऽप्यज्ञता प्रदर्शिता । समय सागरे निमग्नस्यास्यरत्नस्य पुनरुद्धारेण भगवती गीर्वाणभारती समाराधिता भवेदित्येव नः समीहितम् ।

ग्रन्थोऽयं काशीस्थ हिन्दू विश्व विद्यालयस्य वेदप्राध्यापकै वेंद धर्मशास्त्र मीमांसाचार्यै M. A., उपाधि धारिभिः श्री गोपालचन्द्र मिश्रैः सस्नेहं प्रकाशनाय समर्पि तथा च सामवेदिना श्री योगेश्वरप्रसाद मिश्रेण सम्पूर्णं द्रव्यदानं सहर्षं स्वीकृतमित्थमुभयो मिश्रमहानुभावयोः प्रस्तुतप्रकाशने महत्वपूर्णं योगदानं तदर्थं ताभ्यां साभारं शतशः धन्यवादान् वितरामि संस्कृत जगति लब्धप्रतिष्ठेन श्रीसुधाकरशुक्लेन भूमिकालेखनद्वारा शिक्षायाः सरहस्यमभिप्रायः प्रदर्शितः तदर्थमाभार प्रदर्शनपूर्वकं धन्यवादं ददामि ।

श्रीरामसेवकपाठकेन तथाच श्री जगदीशशरण श्रीवास्तव्येन भूमिकायाः पुस्तकस्य च मुद्रणाय शुद्ध प्रतिलिपिः कृता, यद्यप्येतो परिषदः परिवाराङ्गभूतौ परन्तु शिष्टा चारानुरोधेन धन्यवादार्हाविव ।

अनेन संस्कृतजगतः श्री वृद्धिस्तथा च संस्कृतज्ञानाँ परितोषोऽस्माकं कामनाविषयः ।



ब्रजनन्दन शास्त्री
साहित्याचार्यः
मन्त्री, श्री पीताम्बरा परिषद्, दतिया

भाद्रपद शुक्ल चतुर्थी
संवत् २०२१ । ९-९-६४

# प्राक्कथनम्

सर्वधर्मग्रन्थानामाद्या मूर्धन्या वेदा भारतीय धारणानुसारमपौरूषेया ब्रह्मोद्भूताश्च अस्माकं संस्कृते: धर्मस्य प्राणस्वरूपाश्च । वेदेषु भारतीयानां सर्वस्वं निहितं वर्तते । सर्वधर्माणां निधानं वेदेष्वेव। यद्वेदेनोपलभ्यते तदेवाधर्म-संज्ञकम्। ये वेदानुयायिनस्त एवास्तिका:, वेदविरोधिनश्च नास्तिका: । उक्तञ्च "वेदप्रणिहितो धर्मोऽधर्मस्तद्विपर्यय: । वेदेषु सामवेदस्य स्थानमतीव महत्वपूर्ण भगवता श्री कृष्णेनापि गीतायामुक्तं "वेदानांसामवेदोस्मि"। स वेद: षडङ्गाध्ययन पूर्वकमध्येय:, षडङ्गेषु शिक्षाया: प्राथम्यं सर्वविदितं वर्तते । मानव शरीरे यथैव नासिकाया: स्थानं तथैव वेदेषु शिक्षायास्तदुक्तं "शिक्षाघ्राणतु वेदस्य"। इत्थं सर्वासु श्रुतिषु सामवेदस्य श्रेष्ठत्वं सर्वासु शिक्षासु च प्रस्तुत सामवेदीय शिक्षाया:। अस्या उपदेष्टा भगवान् देवार्षीनारद: संगीत शास्त्रस्य प्रतीकभूतां वीणां स्वकरकमलयोर्धारयति । सप्तस्वराणां वैशिष्ट्य प्रयोग: मूर्च्छनादीनामाविष्कार: सङ्गीतशास्त्रस्य सर्वाङ्गीणोपदेशो भगवतो नारदस्याद्याचार्यत्वमुद्घोषयति ।

शिक्षेयं द्वाभ्यां प्रपाठकाभ्यां विभक्ता, प्रत्येकं प्रपाठकञ्च अष्टाभि: कण्डिकाभिर्विभक्तम्, सर्वे २३८ श्लोका: सन्ति । शिक्षाया: प्रारम्भेस्वरवर्णादीनां शुद्धिरत्यावश्यकीति प्रतिपादितम् । स्वरवर्णादिविहीनोमन्त्र: स्वार्थमववोधयितुमक्षम:, शुद्धपाठक:स्वाभीष्टानप्राप्नोति, तद्विपरीतोऽशुद्धपाठकोऽनिष्टान् तथाचोक्तं शिक्षायां–"मन्त्रोहीन: स्वरतोवर्ण वा

मिथ्याप्रयुक्तो न तमर्थ माह। सवाग्वज्रो यजमान हिनस्ति"। प्रथमे प्रपाठके प्रथम कण्डिकायां वेदेषु प्रयुक्ताः स्वराः सम्यङ् निरूपिताः। पूर्वं तावत् "सप्तस्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः। ताना एकोन पञ्चाशदित्येतत्स्वरमण्डलम्। सा रे ग म प ध नि सप्तस्वराः, षड्जग्रामो, गान्धारग्रामो, मध्यमग्रामश्चेति त्रयोग्रामास्तथा च देवर्षि पितृणां सप्त सप्त मूर्च्छना श्चैकीभूयैकविंशतिसंख्याका मूर्च्छना भवन्ति।

एवं च षड्ज ग्रामे चतुर्दश, गान्धार ग्रामे पञ्चदश, मध्यम ग्रामे विंशतिश्च संकलनयैकोन पञ्चाशत्तानाः सन्ति। एतावदेव स्वरमण्डलं विद्यते।

द्वितीयकण्डिकाया वर्ण्यविषयोऽप्यमेव। तृतीयायांलौकिकेषु वैदिकेषु चगीतेषु च रक्तपूर्णलङ्कृतादीना ङ्गणाना न्तथाच शङ्कितगीतादि-चतुर्दशदोषाणां समीचीनं विवेचनमतीव शोभनङ्कृतम्। चतुर्थ्यां स्वराणां वर्णविभागः। यथा—पञ्चम, मध्यमषड्जा एते ब्राह्मणवर्णाः। पञ्चम्यां कण्डिकायां नैसर्गिकेषु पशुपक्षिणां कण्ठध्वनिषु विभिन्नस्वराणा मवस्थितिस्तस्या विशदं विवेचनंच, यथा "षड्जं मयूरो वदति, गावो रम्भन्ति चर्षभम्" इत्यादि स्वराणामुत्पत्तिस्थाननिर्देशपुरःसरं नामकरणस्य सार्थक्यं प्रदर्शितन्तथा च षड्जादिस्वराः सर्वप्रथमङ्केन गीति विषयी कृता, इतिवर्णनानुसारमग्निना षड्जः ब्रह्मणा ऋषभः, सोमेन गान्धारो, विष्णुना मध्यमः स्वरः गीतः।

षष्ठ्यां कण्डिकायाङ्केवलं सामगानस्य लक्षणानि प्रदर्शितानि। सप्तम्यांच कृष्टादि-लयस्थानानां स्थानानि प्रतिपादितानि। तथा च दीप्तायतामृदुमध्यमादीनां प्रकाराश्च वर्णिताः। अष्टम्यां कण्डिकायामार्चिक स्वराणां लक्षणानिभेदाश्चोपदिष्टा महर्षिणा। इतिनिरूपेणन सह प्रथमः प्रपाठकः पूर्णतां प्राप्तः।

द्वितीयेप्रपाठके प्रथमायाङ्कण्डिकायां साजात्यस्वराणाम्परिभाषा नियमविषयीकृता। तथा चाभिनिहित वहुस्वारादयः प्रकाराः प्रस्फुटी कृताः। द्वितीयायां स्वराणां ह्रस्व कम्पनन्दीर्घकम्पनञ्च विशदीकृतन्तथा रेफहकारादिव्यञ्जनानामुच्चारणस्य विस्तृतं विवरण चात्रोपलभ्यते।

तृतीयायांकुत्रोदात्तस्यानुदात्तस्य स्वरितस्यवा प्रचयोभवति तस्य सम्यङ निरूपणं शोभनम्। तथा समासेऽवग्रहस्वरूप निर्देश पूर्वक मवग्रह-भेदाश्च प्रस्फुटी कृताः। चतुर्थीकण्डिका विवृतिनिरूपणात्प्रारब्धा तथा च १–वत्सानुसृता २–वत्सानुसारिणी ३–पाकवती ४–पिपीलिकाख्याः चतस्रः विवृतीः सप्रपंचं व्याकरोति। पंचम्यां दश प्रकारकाणां पदान्तानां वलावलं तथा च व्यंजनानामुच्चारण चारुत्वं च विशेषेण विशदीकृतम्। सप्तम्यां पथ्यावृतस्य विपुलावृत्तस्य निदर्शनपुःसरं लक्षणानि लक्षितानि, अस्यामेव पदस्वरलक्षणानामष्टभेदाः व्याख्याताः।

अष्टम्यांकण्डिकायां सामवेदस्योद्गातुरावश्यक नियमानामुल्लेखः। नियमपालनात् सामपाठिनः सिद्धि प्राप्नुवन्ति। कायिक-वाचिक-मानसिकेति त्रिविधाशुद्धिः सामगानस्य साफल्य-हेतुः। आरोग्यार्थ जठराग्नेः रक्षाऽवश्यंकरणीया सदैवहितंपथ्यंच भोक्तव्यम्। मानसिक-शुद्धयर्थं ब्राह्मे मुहूर्ते प्रवुध्य परब्रह्म-स्मरणंकृत्वा पलाशबिल्वापामार्ग शिरीषाणां मध्ये कस्यापि दन्तधावनंचरेत्। उदरशुद्धयर्थंन्त्रिफलानाँ सेवन हितकरमिति विवेचनेन सह द्वितीयं प्रपाठकं पूर्णतांप्राप्तम्। इत्थमियं नारदीय-सामशिक्षा दिव्यालौकिकज्ञानराशिः सामवेदाध्येतृभिरवश्यमध्येतव्या निदिध्यासितव्या च न केवलमियं शिक्षासामवेदाध्ययने महत्युपकारिणी प्रत्युत संगीतशास्त्रस्यादिमो ग्रन्थः।

इयं शिक्षा मूलश्लोकमात्रं मेरठ निवासिना पण्डित श्री तुलसीराम स्वामिना प्रकाशिता। अद्यावधि कापि टीका प्रकाशिता नाभूत्, विनाभाष्येणच सुकुमारमतीनामध्येतॄणामर्थावगतिरसम्भवा। एतदभावनिरासायेदं

श्रीशोभाकरभट्ट-भाषितं भाष्यमवश्यमेव प्रभविष्णु । इदंपरिशील्य सामगाः सामगा भविष्यन्ति, भाष्येऽस्मिन् शिक्षाया गूढातिगूढानि रहस्यानि विशदीकृतानि । भाष्यकर्तुर्विषये किमपीतिवृत्तन्नोपलभ्यते । स्वजन्मना-कन्देशमलंचकार ? जन्म समयश्चस्कः, कश्चास्य धन्यतमो जन्मदाता ? कुत्रशिक्षाप्राप्ता ? इति सकलंकालकोटरे सुगुप्तं विद्यते । अतस्तद्विषये किमपि लेखनमसम्भवमेव । परंत्वेतस्य प्रतिभापरिचयाय प्रस्तुतं लघुकलेवरमिदं भाष्यमलम् ।

आज्ञाप्तोऽहमल्पबुद्धिः श्री स्वामिपादैर्भूमिका लेखनाय नितान्तम समर्थोऽपि तत्कृपयैव किमप्यलिखम् । आशासे ग्रन्थोऽयंभृशमुपकरिष्यति सानातनीं जनतामस्माक संस्कृतिञ्च ।

श्रावणी पूर्णिमा
सं० २०२१
दि० २२-८-६४

**पंडित सुधाकरशुक्लः**
एम० ए० शास्त्री काव्यतीर्थः

# विषयानुक्रमणिका



श्री गणेशाय नमः

# नारदीया शिक्षा

## सटीका

### शिक्षाविवरणोपेता

✣ ✣

## प्रथमः प्रपाठकः

✣ ✣

### प्रथमा कण्डिका

अथातः स्वरशास्त्राणां सर्वेषां वेदनिश्चयम् ।
उच्चनीचविशेषाद्धि स्वरान्यत्वं प्रवर्तते ॥१॥

卐 卐 卐

प्रणम्य परमात्मानमृक्–सामस्वर–विग्रहम् ।
मुनिना नारदेनोक्ता शिक्षा व्याख्यातुमिष्यते ॥१॥

अथ सामसंहिताऽध्ययनादनन्तर मत इति । संहिताध्ययनात् क्षिप्रं सर्वेषां शास्त्राणां ऋक् सामगतानां निश्चयं सम्यक

स्वरूप प्रतिपत्ति वेद, मयोच्यमानं जानीयादिति भगवान्नारद: सामान्येन शिष्यं प्रत्याह– सामान्यभूत ओंकारगतस्वरूप: उच्चनीचविशेषे उच्चतरे, उच्चतमे, नीचे, नीचविशेषे, नीचतरे, नीचतमे, चस्थानेऽभिव्यज्यमान: स्वरान्यत्वं नाना स्वरतां प्रतिपद्यत इत्यर्थः।

अथवा सर्वेषां वाग्भिर्निश्चयमितिवा पाठः, कथयामीति पूर्वपठितशिक्षामाहारयिष्यते, मंत्र–ब्राह्मण–वाक्यानि, ऋगादि स्वराणां विवेक उच्यते ॥१॥

**आर्चिकं गाथिकं चैव सामिकं च स्वरान्तरम् ।**
**कृतान्ते स्वर शास्त्राणां प्रयोक्तव्यं विशेषतः ॥२॥**

उच्च नीचं तथा स्वरान्यत्वमित्युक्तं तच्च ऋग्विषये-उदात्त स्वरित श्रुतिलोपे नान्तरत्वं व्यवधानम् ॥२॥

**एकान्तरा स्वरो ह्यृक्षु गाथासुद्व्यन्तरः स्वरः ।**
**सामसुत्र्यन्तरं विद्यादेतावत् स्वरतोऽन्तरम् ॥३॥**

तद्यथा। "तत्सवितुर्वरेण्यमित्यादिश्रुतिलोपेनमहन्मेवोचः। इत्यादि सामसक्तिः तिलोपेनान्तरंव्यवधानं जानीयात्, स्वर व्यवधानं गाथां जानीयात्। धियो यो नः प्रचोदयादि" त्यादि एतावत् स्वराणामन्तरं व्यवधानं सर्वत्र बोद्धव्यम् ॥३॥

शिक्षाया अपरिज्ञाने ऋगादौ सम्यक् स्वरो न परिज्ञायत इत्याह।

**ऋक् सामयजुरङ्गानि ये यज्ञेषु प्रयुञ्जते ।**
**अविज्ञानाद्धि शास्त्राणां तेषां भवति विस्वरः ॥४॥**

ऋक् सामयजुर्लक्षणानि यज्ञाङ्गानि याज्यास्तोत्रकरण-मंत्रादीनि तेषां सम्यक् स्वरूपाऽप्रतिपत्तिः परिभवतीति । विरुद्धं स्वरज्ञानं विस्वरः ॥४॥

स्वरादि वैगुण्येन केवलं देवतायाः सांमुख्यं न भवति यावद्वि-रुद्धाचरणं तावत् प्रत्यवायो भवतीत्याह ।

**मन्त्रो हीनः स्वरतो वर्णतो वा**
**मिथ्या प्रयुक्तो न तमर्थमाह ।**
**स वाग्वज्रो यजमानं हिनस्ति**
**यथेन्द्र शत्रुः स्वरतोऽपराधात् ॥५॥**

मिथ्येति न शास्त्रानुसारेण प्रयुक्तः । न तमर्थमाहेति वदन्नाह–अथ वाच्यस्यासन्निधिपरां, निष्प्रयोजनमर्थाभिधानं सवाक् लक्षणोवज्रइव वज्रो यजमानं निषिद्धाचरणाद् यजमानं हिनस्त्येव यथा इन्द्र शत्रुः स्वरस्यापराधात् प्रयोक्तारं हिनस्ति । इन्द्रशत्रुर्मंत्रउच्यते, इन्द्रः शब्दः शातयिताऽस्येति बहुव्रीहौ "प्रकृत्या पूर्वंपदमित्याद्युदात्तं" पदम्, इतरथा इन्द्रस्य शत्रु-रिति षष्ठी समासे 'समासान्त' इत्यन्तोदात्तंस्यात् । इन्द्रस्य परमेश्वरस्य शत्रुर्नसंभवतीति विरुद्धार्थता, स्वरान्तरं प्रसज्यते अतः स्वराद्यवधारणेयत्नः कार्यः ॥५॥

स्वरादि वैगुण्येनच न केवलं कर्मणिवैगुण्यमदृष्ट दोषश्च। यावद् दृष्टेऽनादि दोषयोग इत्याह।

**प्रहीणः स्वरवर्णाभ्यां योविमंत्रः प्रयुज्यते।**
**यज्ञेषु यजमानस्य रुषत्यायुः प्रजां पशून् ॥६॥**

मंत्रो यजमानस्य आयुरादीन् रुषतिविनाशयतीत्यर्थः ॥६॥ स्वर रूपं त्रिषु स्थानेष्वभिव्यज्यत इत्युच्यते।

**उरः कण्ठः शिरश्चैव स्थानानि त्रीणिवाङ्मये।**
**सवनान्याहुरेतानि साम वाऽप्यर्थतोन्तरम् ॥७॥**

नीच मध्यमोत्तरया उरसि कण्ठे शिरसि चाप्यभिव्यज्यते उरसि वक्षःस्थाने शब्दोच्चारणं प्रातःसवनमुच्यते, नीचै-रुच्चारितं प्रातः सवन शब्दस्येत्यर्थः। कण्ठस्थाने मध्यमेन स्व-रेणोच्चारणं माध्यंदिनं सवनं, शिरोलक्षणे स्थाने उच्चैरभि-व्यज्यमानं शब्दजातं तृतीयं सवनं, साम्नोऽपि सप्तस्वरात्म-कस्याधरोत्तर आदावेवसंभवः। स्वरसप्तकता कण्ठग्रीवा इति भेदेननिर्देशः। सामवाप्यर्थतोन्तरमिति न सम्बद्धः। ऋग्यजुः सामान्येऽपि स्थानत्रये स्थितानीत्याह ॥७॥

**उरः सप्तविचारं स्यात्तथा कण्ठस्तथाशिरः।**
**न च सप्तोरसि व्यक्तास्तथा प्रावचनोविधिः ॥८॥**

सप्तानां स्वराणां विचरणं विचार इति सप्तविचारमुरः, मन्द्रातिस्वारयोरुरसि न सम्यक् अभिव्यक्तिर्यथेतरत्रेति प्रवचने

अध्ययने भवो विधिरध्यापनकालेवगम्यते, अनभिव्यक्तावपि मानसे प्रयोगे उपांशु प्रयोगे च वर्ण स्वरयोरनाख्यानो भवत्येव, साम्नि सर्वात्मना स्वराणामवधारणं प्रवर्तते, तदनुसारेण ऋग्यजुषामुदात्तादिस्वरप्रवृत्तिरित्याह ॥८॥

**कठ कालाप वृत्तेषु तैत्तिरीया ह्वरकेषुच ।**
**ऋग्वेदे सामवेदे च वक्तव्यः प्रथमः स्वरः ॥९॥**

कठादि शाखासु ऋग्वेदे सामवेदे च ऋग्यजुषां सामिकस्वरः प्रवर्तते । स्वरिते प्रथमस्वरानुसारेण पाठोऽवधार्यते । प्रथम स्वरा द्वितीय स्वरौ ऋग्वेदेऽनु क्रियमाणाववधार्येते, क्रुष्टः प्रथमस्वरःसमुदायानुकारश्च लौकिके व्यवहारे प्रवर्तत इत्याह ।

क्रुष्टः उच्चः मध्यमः प्रथमः स्वरः ॥९॥

**ऋग्वेदस्तु द्वितीयेन तृतीयेन च वर्त्तते ।**
**उच्च मध्यम संघात स्वरो भवति पार्थिवः ॥१०॥**

तृतीयादिषु स्वरानुसारेणाह्वरकाणां वा पाठः द्वितीयाद्यनुकारेण तैत्तिरीयाणां साम्नितु सप्त स्वरा भवन्तीत्याह ॥१०॥

**तृतीय–प्रथम–क्रुष्टान् कुर्वन्त्याह्वरकाः स्वरान् ।**
**द्वितीयाद्यांस्तु मन्द्रान्तां स्तैत्तिरीयाश्चतुरः स्वरान्॥ ११॥**

**प्रथमश्च द्वितीयश्च तृतीयोऽथ चतुर्थकः ।**
**मन्द्रः क्रुष्टो ह्यतिस्वारः एतान् कुर्वन्ति सामगाः ॥१२॥**

छन्दोगानां वाजसनेयिनां च ब्राह्मणौ गाथास्वरौ प्रथमद्वितीयो भवत इत्याह ॥१२॥

**द्वितीय प्रथमावेतौ तांडिभाल्लविनां स्वरौ ।**
**तथा शातपथावेतौ स्वरौ वाजसनेयिनाम् ॥१३॥**

ताण्ड्यं च विंशादिकं ब्राह्मणं कौथुमादयोऽधीयन्त इति ताण्डिनः, भाल्लविनः छन्दोगा एव वाजसनेयिनाम् ॥१३॥

**एते विशेषतः प्रोक्ताः स्वरा वै सार्ववैदिकाः ।**
**इत्येतच्चरितं सर्वं स्वराणां सार्ववैदिकमिति ॥१४॥**

सर्वं वेदेषु भवं चरितं स्वरितम् ॥१४॥

। इति प्रथमा कण्डिका ॥

## द्वितीया कण्डिका

**सामवेदेतु वक्ष्यामि स्वराणां चरितं यथा ।**
**अल्प ग्रन्थं प्रभूतार्थं श्रव्यं वेदाङ्गमुत्तमम् ॥१॥**

अथ छन्दोगानां सामगाने आर्च्चिकेच स्वरनिरूपणं विशेषतः क्रियते ।

ऋक्सामलक्षणस्य निराकाङ्क्षात् प्रभूतार्थं सामस्वराणां महता यत्नेनाधिगमात्तदुपास्यं श्राव्यम्, उत्तमं वेदाङ्गं–वेद स्वरूप विषयत्वात् सामगतं स्वरादि निरूपणं तावत क्रियते सामार्थं सामर्थ्यादार्च्चिकस्य ॥१॥

**तान-राग-स्वर-ग्राम-मूर्च्छनानां तु लक्षणम् ।**
**पवित्रं पावनं पुण्यं नारदेन प्रकीर्तितम् ॥२॥**

**शिक्षामाहुर्द्विजातीनामृग्यजुः सामलक्षणम् ।**
**नारदीयमशेषेण निरुक्त मनु पूर्वशः ॥३॥**

पवित्रं यावदुक्त मनुपूर्वशः । अनयोर्भाष्यं त्यक्तम् (= स्पष्टम्) ॥२–३॥

**सप्तस्वरास्त्रयो ग्रामा मूर्च्छनास्त्वेक विंशतिः ।**
**ताना एकोन पञ्चाश-दित्येतत्स्वर मण्डलम् ॥४॥**

स्वराणां समूहो मण्डलम्, तस्यनाम्ना निरूपणं क्रियते। श्लोकानुरोधात् क्रमो न विवक्षितः ॥४॥

**षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा।**
**पञ्चमो धैवतश्चैव निषादः सप्तमः स्वरः ॥५॥**

**षड्ज-मध्यम-गान्धारा स्त्रयोग्रामाः प्रकीर्तिताः।**
**भूर्लोकाज्जायते षड्जो भुवर्लोकाच्च मध्यमः ॥६॥**
**स्वर्गान्नान्यत्र गान्धारो नारदस्य मतं यथा।**

षड्जानुसारेण कदाचित् स्वरः प्रवर्तते, कदाचिन्मध्यमानुसारेण, कदाचित् गान्धारानुसारेण वा। अतएव ग्राम त्रयमेव, प्रधान मुखेनेतरेषामवधारणात्, एकदेशो यावदधिक देशेन यथा जनपदादेर्ग्रामत्वम्।

गान्धारानुसारेण तु मनुष्यलोके स्वरावस्थानं स्फुटमुपलभ्यत इत्याह ॥६॥

**स्वरराग विशेषेण ग्राम रागा इति स्मृताः ॥७॥**

दीप्तायता स्वर श्रुति विशेष परेन ग्रामाणां ग्रामरागाः ॥७॥

## रागप्रकारानवधारयन्नाह

**विंशतिं मध्यमग्रामे षड्जग्रामे चतुर्दश।**
**तानान् पञ्चदशेच्छन्ति गान्धारग्राममाश्रितान् ॥८॥**

परस्परं स्वराणां तननात्तानाः। विचित्रेण मध्यमादनन्त-रङ्गाधारतः षड्जः ततऋषभ इत्येवं प्रकारेण स्वराणां प्रयोगे मध्यमग्रामे विंशतिस्ताना भवन्ति तथा षड्ज ग्रामे चतुर्दश गान्धार ग्रामे पञ्चदशेत्येवं एकोन पञ्चाशदुच्यन्ते तानाः ॥८॥

(या च ता वला नाम अथैताः सप्तेति सन्धयः ।)

**नन्दीं विशाला सुमुखी चित्रा चित्रवती सुखा ।**
**वला या चाथ विज्ञेया देवानां सप्त मूर्च्छनाः ॥९॥**

स्वराणां समुच्छ्रयणादूर्ध्वमुच्छ्रयणात्प्रेरणं मूर्च्छना, प्रति ग्रामं स्वर सप्तक भावनादेकविंशति भवन्ति ।

नन्दीविशालेति ।

देवापेक्षया मूर्च्छनाः सप्तउक्ता नतु ग्रामः षड्जऋषभाः, अतश्च ग्रामत्रये देवानां सप्त, तथा पितृणां, ऋषीणां च सप्त । 'नन्दी विशाला सुमुखी चित्रा चित्रवती सुखा वला वा इत्यर्था-नुसारेण संज्ञाः देवतानामर्थं चेत्यागमन एवावगन्तव्यं यथा स्वरवर्णनिर्देशः ॥९॥

**आप्यायिनी विश्वभृता चन्द्रा हेमा कपर्द्दिनीं ।**
**मैत्री वार्हती चैव पितृणां सप्त मूर्च्छनाः ॥१०॥**

**षड्जे तूत्तर मन्द्रा स्यादृभे चाभिरुद्गता ।**
**अश्वक्रान्ता तु गान्धारे तृतीया मूर्च्छना स्मृता ॥११॥**

**मध्यमे खलु सौवीरा हृष्यका पञ्चमे स्वरे ।**
**धैवते चापि विज्ञेया मूर्च्छना तूत्तरायता ॥१२॥**

निषादाद्रजनीं विद्यादृषीणां सप्त मूर्च्छनाः ।

सप्त उत्तर मन्द्राभिरुद्गता–अश्वक्रान्ता सौवीराहृष्यका उत्तरायता रजनीति षड्जादि स्वरगताः सप्त ऋषिसंबन्धिन्य उक्ताः ।

देव मूर्च्छनानां गन्धर्वा अनुयायिनः, पितृमूर्च्छनानांतु यक्षाः, ऋषि मूर्च्छनानां मनुष्या इत्याह–

उपजीवन्ति गन्धर्वा देवानां सप्तमूर्च्छना ।।१३।।

पितृणां मूर्च्छनाः सप्त तथा यक्षा न संशयः ।
ऋषीणां मूर्च्छनाःसप्त यास्त्विमा लौकिकाःस्मृताः ।।१४।।

उत्तरमन्द्रादिका या मूर्च्छना ऋषीणां सप्त ता लौकिका इति षड्जादिभिः सप्तभिः स्वरैरुच्चार्यमाणै र्देवादयः परितुष्यन्तीत्याह–

षड्जः प्रीणाति वै देवानृषीन् प्रीणाति चर्षभः ।
पितृन्प्रीणाति गान्धारो गन्धर्वान्मध्यमः स्वरः ।।१५।।

देवान्पितृनृषींश्चैव स्वरः प्रीणाति पञ्चमः ।
यक्षान्निषादः प्रीणाति भूतग्रामं च धैवतः ।।१६।।

।। इति द्वितीया कण्डिका ।।

## तृतीया कण्डिका

लौकिकं च वैदिकं च गानं दशगुण युक्तं तु वेदिकार्य-मित्युच्यते ॥

**गानस्यतु दशविधा गुणवृत्तिस्तद्‌यथा—**
**रक्तं पूर्णमलंकृतं प्रसन्नं व्यक्तं विक्रुष्टं**
**श्लक्ष्णं समं सुकुमारं मधुरमिति गुणाः ।**

गानस्य दशगुणाः । रक्तदीनां परस्पर विवेकेन स्वरूप निर्द्देशः क्रियते ॥

**तत्र रक्तं नाम वेणुवीणा स्वराणामेकी भावे-रक्तमित्युच्यते ॥१॥**

वंशवीणा पुरुष स्वराणामभेदे सति या रंजना तद्रक्तं-गानम् ॥१॥

**पूर्णनाम स्वरश्रुति–पूर्णाच्छन्दः पादाक्षर संयोगात् पूर्णमित्युच्यते ॥२॥**

स्वरो मध्यमादि–स्वर–विशेषः स्वर–श्रुत्योरनयोःकरणं पूरणं छन्दसः पादानामक्षराणां च संयोगात्स्फुटमुच्चारणा-त्पूर्णम् ॥२॥

**अलंकृतं नामोरसि शिरसि कण्ठयुक्तमित्यलंकृतम् ॥३॥**

कण्ठ युक्तं प्रथमे स्थानें यदवस्थितं तं नीचैरुरसिस्थितं क्रियतें शिरसिचोच्चैर्वाणी क्रियते तदलंकृतं भवति ॥३॥

**प्रसन्नं नामावगत गद्गद् निर्विशङ्कं प्रसन्नमित्युच्यते ॥४॥**

कण्ठ निष्पीडनेनोच्चारणं गद्गदमपगतं यत्र तत् । निर्गता विविधा शंका यत्र तत्प्रसन्नं ॥४॥

श्लोकान्तर्गतानां पदादीनां गीत्यावधारणं सम्यगवधारणात् व्यक्तं गानमित्याह ।

**व्यक्तं नाम पद पदार्थ प्रकृति विकारागम लोपकृत्तद्धित समास धातु निपातोपसर्ग स्वरलिङ्ग वृत्ति वार्तिक विभक्त्--यर्थं वचनानां सम्यगुप-पादने व्यक्तमित्युच्यते ॥५॥**

पदस्यार्थानुसारेण प्रकृतेर्द्धातोः प्रातिपदिकस्य यद्-व्यवधारणा वृद्ध्यादिका विकाराः, असुगित्याद्यागमउपधादि लोपः, कृत्तद्धित प्रत्ययाः, द्वन्द्वतत्पुरुषादयः समासाः, इयं प्रकृति-श्चायं धातुरयं निपातभागोऽयमुपसर्ग–भाग इति विवेक्तव्यं, स्वर उदात्तादिः, स्त्री पुंनपुंसकानि लिङ्गानि, सामान्येनावधार-णार्थं वृत्तिः, ऊहापोह–वशेनार्थावधारणं वार्तिकं, कर्तृकर्मा-द्यवधारणं विभक्त्यर्थः, एक–द्वि–वहुत्वावगमो वचनं, एवं परिज्ञाने व्यक्ततावगमः ॥५॥

**विक्रुष्टं नामोच्चैरुच्चारितं व्यक्तपदाक्षरमिति विक्रुष्टम् ॥६॥**

उच्चैरुच्चार्यमाणेऽपि पदाक्षराणां स्फुटता यत्र भवति नाव्यक्तत्वं तद्विक्रुष्टम् ।

शोभनयात्वरितादिकमावृत्यावर्त इति ॥६॥

**श्लक्ष्णं नामाद्भुतमविलम्बितमुच्चनीच प्लुतसमाहार हेलया लोपन यादिभिरुपपादनादिभिः श्लक्ष्णमित्युच्यते ॥७॥**

अतश्च ह्रस्वमेकमात्रं दीर्घंद्विमात्रं दीर्घाच्च विषम्य कार्यमिति सामर्थ्यादुक्तं भवति । हेलया सहवेलया तस्य द्रुतार्थावृत्तेरुपनयतः सम्पादनं आदि ग्रहणेन मध्यमाया विलम्बितायाश्च ग्रहणं तच्चस्फुट वाचः पुटाच्च तत्पिता पुत्रीयतयात्म वृत्तयो गीतेति उच्यन्ते ॥७॥

अत्वरितं गानमद्भुतं विशुद्धं समविलम्बितं उच्चनीचप्लुतानां समाहरणं यत्र नात्युच्चं नातिनीचं प्लुतंत्रिमात्रं वा ॥

**समंनामावाप निर्वाप प्रदेशं प्रत्यन्तर स्थानानां समासः सममित्युच्यते ॥८॥**

स्वरस्यापूरणं प्रक्षेप आवापः, निर्वापो न्यूनता करणं तेषामावाप निर्वाप प्रदेशानां प्रत्यन्तरेषु व्यवहित–स्थानेषु समासनं प्रक्षेपो नव्युत्क्रमेणेति समंगानं भवति ॥८॥

**सुकुमारं नाम मृदुपदवर्ण स्वर कुहरण युक्तं सुकुमारमित्युच्यते ॥९॥**

मृदुभिः पदाद्युच्चारणैर्युक्तं न कठिनैः कुहरणमव्यक्तानां वर्णानां कण्ठनिष्पीडने नोच्चारणम् ॥९॥

**मधुरंनाम स्वभावोपनीतललितपदाक्षरगुण समृद्धं मधुरमित्युच्यते ॥१०॥**

ललिताः प्रहर्षिताः मुखाद् ये निसृताः पदाक्षर–गताः गुणास्तैः सुखकरं गानं उपसंहरति पूर्वोक्तम् ॥१०॥

एवमेतैर्दशभिगुणैर्युक्तं गानं भवति एतद्विपरीता गीति-दोषा उच्यन्ते, भवन्ति चात्रश्लोकाः ।

**शंकितं भीतमुद्‌धृष्टमव्यक्तमनुनासिकम् ।**
**काकस्वरं शिरसिगतं तथा स्थान विर्वाज्जतम् ॥११॥**

**विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् ।**
**व्याकुलं तालुहीनं च गीति दोषाश्चतुर्दश ॥१२॥**

शङ्कितस्य च भीतस्य च गानं शङ्कितं भीतं । क्षुब्धं गानमुद्धृष्टं, अव्यक्तमस्फुटम्, नासिका स्थान प्राधान्येन गान-मनुनासिकम्, कण्ठस्थान निष्पीडनेन गानं काकस्वरं, अत्युच्चैर-परिपूर्णं गानं शिरसिगतं, एकस्थान विषयस्यानेकस्थाने योगात् स्थान विवर्जितं, यस्मिन पर्वणि यत् स्वरितं विहितं तस्या-

विरामाद्विस्वरं, गानमध्ये चित्तव्याक्षेपाद्विरसं, पर्वणामप्राप्त-व्यवधान-करणं च विश्लिष्टं, प्लुतस्य शीघ्रं ह्रस्व दीर्घयोश्च विलम्बितं पातनं विषमाहतं, वर्णस्वरादि वैषम्येन गानं व्याकुलं, वृत्तीनामनियमनेन प्रवृत्तं तालुहीनम् ।

**आचार्याः सममिच्छन्ति पदच्छेदन्तु पण्डिताः ।**
**स्त्रियो मधुरमिच्छन्ति विक्रुष्टमितरे जनाः ॥१३॥**

समपदच्छेद-मधुरोच्च-रूपं गानं चतुष्प्रकारं गानंकर्त्तं-व्यमित्याचार्यादि मुख्येनोच्यते नतु समादीनांविकल्पः, विक्रुष्टंतु न निपातमितर ग्रहणात् ॥१३॥

– इति तृतीया कण्डिका –

## चतुर्थ कण्डिका

पद्म पत्रप्रभ: षड्जऋषभ: शुकपिंजर: ।
कनकाभस्तु गान्धारो मध्यम: कुन्दसप्रभ: ॥१॥

वर्णं स्वरच्छन्दो मंत्र समधिष्ठात्र्यो देवता भवन्ति तासां चेच्छावशेनाधिष्ठानापेक्षया शरीरग्रहणे पद्मपत्रादि–रूपता भवतीत्यागमादवधार्यंत इत्याह ॥१॥

पंचमस्तु भवेत्कृष्ण: पीतकं धैवतं विदु: ।
निषाद: सर्ववर्ण: स्यादित्येता: स्वर–वर्णता: ॥२॥

स्पष्टम् ॥२॥

पंचमोमध्यम: षड्ज इत्येतें ब्राह्मणा: स्मृता: ।
ऋषभो धैवतश्चापीत्येतौहि क्षत्रियावुभौ ॥३॥

गान्धारश्च निषादश्च वैश्यावर्द्धनवैस्मृतौ ।
शूद्रत्वं विद्धिचार्द्धेन पतितत्वान्न संशय: ॥४॥

पंचमस्योत्कर्षान्मध्यम–षड्जयोश्च ग्रामत्वाद् ब्राह्मणत्व-मुत्कर्ष–सामान्यात्, ऋषभ–धैवतयोश्च बलयोगात् क्षत्रियत्वं, गान्धारस्य मध्यमादेवारोहाद्वैश्यता । निषादस्यावरोहाद्वैश्यत्वं

शूद्रत्वं च प्रतिपाद्यते । दुःखवाडवोस्य मध्यमस्य लक्षणमेवार्थात् क्रियते । यथा स्वरसन्निवेशेन ग्रामवैचित्र्यं लौकिके गाने एवं स्वर सन्निवेशे वैचित्र्यात् सामगानमस्य लक्षणमेवमर्यः क्रियतेऽनन्तप्रभेदं भवतीति ॥३-४॥

**ऋषभोत्थाः षड्जहतो धैवतसहितश्च पंचमोयत्र ।**
**निपतति मध्यमरागे तन्निषादं षाडवं विद्यात् ॥५॥**

ऋषभादनन्तरं योऽसौ षड्जस्तेन धैवतसहितः, पंचमसहितो यत्रगानं मध्यमरागे मध्यमस्य ग्रामे तं निषादं षाडवं जानीयात् गान्धाराभावात्, षाडवं स्वरपंचकेन गीयमानस्य मध्यमस्योदितत्वेन लक्षणं क्रियते ॥५॥

**यदि पंचमो विरमते गांधारश्चान्तरस्वरो भवति ।**
**ऋषभो निषादसहितस्तं पंचममीदृशं विद्यात् ॥६॥**

मध्यमराग इत्यनुवर्तते मध्यमे पंचमस्य विरामे गान्धारः तत ऋषभस्ततो निषादः पंचम इतिक्रमः । पुनर्मध्यम-लक्षणमुच्यते ॥६॥

**गांधारस्याधिपत्येन निषादस्य गतागतैः ।**
**धैवतस्य च दौर्बल्यान्मध्यम ग्राम उच्यते ॥७॥**

मध्यमप्रारम्भे गान्धारस्याधिपत्यमाधिक्यं यदा भवति निषादस्य गमनागमनं च पुनः पुनरुच्चारणाद्धैवतस्य च दौर्बल्यं

सकृदुच्चारणं षड्जऋषभे पंचानां सामान्येनावस्थानं तदा-मध्यमग्रामो भवति। षड्जग्रामस्य लक्षणं क्रियते ॥७॥

**ईषत् स्पष्टो निषादस्तु गान्धारश्चाधिको भवेत्।**
**धैवतः कम्पितो यत्र षड्जग्रामं तु निर्दिशेत् ॥८॥**

षड्जमारंभे निषादस्य लाघवेनोच्चारणं, गान्धारस्य चाधिकेनोच्चारणं, धैवतस्य च कम्पनपातनं, स्वरान्तराणामनन्तरं यथा रुचिगानमेवं षड्जग्रामोभवति। षड्जग्रामराग लक्षणं क्रियते ॥८॥

**अन्तरस्वरसंयुक्ता काकलिर्यत्र दृश्यते।**
**तंतु साधारितं विद्यात् पंचमस्थं तु कैशिकम् ॥९॥**

षड्जप्रारंभे चतुःश्रुतिक एव निषादो यदा भवति तदा पंचमस्थं परमुपर्यवस्थितं तं साधारितं सदृशं श्रुतिकैशिकसंज्ञं गीतकं भवतीति मध्यमे ग्रामरागे लक्षणं च श्लोकद्वयेनोदा-हरणं तथा क्रियते ॥९॥

**कैशिकं भावयित्वातु स्वरैः सर्वैः समन्ततः।**
**यस्मात्तु मध्यमे न्यासस्तस्मात्कैशिकमध्यमः ॥१०॥**

**काकलिदृश्यते यत्र प्राधान्यं पंचमस्यतु।**
**कश्यपः कैशिकं प्राह मध्यमग्रामसंभवम् ॥११॥**

पूर्वोक्तं कैशिकं यदा सर्वै स्वरैर्भाष्यते योज्यते मध्यमादुपक्रम्यते मध्यमे च न्यस्यते तत्र स्थाप्यते तदा कैशिकमध्यमो ग्रामरागो भवतीति मध्यमग्रामादुत्पन्नस्य काकलिरेव श्रुतिको निषादो भवति पंचमस्य प्राधान्यं पुनः पुनरुच्चारणं शेषाणि स्वरान्तराणि सामान्येन वर्त्तन्ते तदा मध्यम-ग्राम-संभवं कैशिकं कश्यप ऋषिराह । वीणादिसहितं हस्तांगुलिचातुर्येणाभ्यस्तं स्फुटं यदा च तद् भवति तदनुसारेण सामस्वराधिगमः सम्यग्भवति निर्वचनेन प्रणिगदति ॥१०-११॥

**गेति गेयं विदुः प्राज्ञा धेति कारुप्रवादनम् ।**
**वेति वाद्यस्य संज्ञेन गांधर्वस्य विरोचनमिति ॥१२॥**

गन्धर्वेभ्य आगतं गान्धर्वं तस्याक्षरोपलक्षितार्थं प्रतिपादेन विरोचनं विशेषतो रोचनमुद्दीपनं भवति गाशब्देन गानं लक्ष्यते "धकारेण वकारेण वैणिकस्य प्रवादनं" चातुर्येण हस्तांगुलिधारणप्रवादनपदेन कथितं वकारेण वादनं लक्षितम् ॥१२॥

–इति चतुर्थी कण्डिका–

## पंचमी कण्डिका

लौकिके गाने स्वराणां मध्यमादिस्वरशब्दैर्व्यवहारत्रयं प्रायेण सर्वेषां सर्वस्य स्वरभावतो, वैदिकेतु पंचमनिषादानां क्वचिदेव भवेद्धस्तांगुलिनिवेशनेन च सम्यगवधारणात्प्रथमादि संज्ञा। अंगुलिनिवेशनं च स्वराणां क्रियते ॥

**यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः।**
**योद्वितीयः सगान्धारस्तृतीयस्त्वृषभः स्मृतः ॥१॥**

**चतुर्थः षड्ज इत्याहुः पंचमो धैवतो भवेत्।**
**षष्ठो निषादो विज्ञेयः सप्तमः स्मृतः ॥२॥**

वेणुर्वंशः स्वरपरिज्ञानार्थमुच्यते ॥२॥

**षड्जं वदति मयूरो गावो रंभन्ति चर्षभम्।**
**अजाविकेतु गान्धारं क्रौंचो वदति मध्यमम् ॥३॥**

**पुष्पसाधारणे काले कोकिला वक्ति पंचमम्।**
**अश्वस्तु धैवतं वक्ति निषादं वक्ति कुञ्जरः ॥४॥**

रंभन्ति उच्चारयन्ति, पुष्पाणां नामजातीप्रभृतीनां साधारणो भवकालो वसन्तः तत्र वसन्ते वहून्युच्चावचानि पुष्पाणि संभवन्ति। प्राधान्येन कण्ठादिस्थानतः षड्जादीना-मित्याह ॥३–४॥

**कण्ठादुत्तिष्ठते षड्जः शिरसस्त्वृषभः स्मृतः ।**
**गान्धारस्त्वनुनासिक्य उरसो मध्यमः स्वरः ॥५॥**

**उरसः शिरसः कण्ठादुत्थितः पंचमः स्वरः ।**
**ललाटाद्धैवतं विद्यान्निषादं सर्वसन्धिजम् ॥६॥**

मुखेनानुगता नासिकानुनासिका, अनुनासिकायां भवो अनुनासिक्यः, उरस उत्थितः, मध्यमः स्वरः, ललाटादुत्पन्नं, सर्वेभ्यः कण्ठादिभ्यः सन्धिभ्यो जायत इति सर्वसन्धिजं विद्यात् ॥५–६॥

**नासां कण्ठमुरस्तालु जिह्वां दंतांश्च संश्रितः ।**
**षड्भिः संजायते यस्मात्तस्मात् षड्ज इति स्मृतः ॥७॥**

कण्ठादिभ्यः उत्पाद्यमानाः षड्जादयोऽन्यान्यपि स्थानानि गुणत्वेन स्पृशन्तीत्याह ॥७॥

**वायुः समुत्थितो नाभेः कण्ठशीर्षसमाहतः ।**
**नर्दत्यृषभवद् यस्मात्तस्मादृषभ उच्यते ॥८॥**

ऋषभः शिरस उत्पद्यमानः कण्ठमपि स्पृशतीत्युच्यते ॥८॥

गान्धारः शिरसो नासिका प्रदेशादुत्पन्नः कण्ठमपि-स्पृशतीत्याह–

**वायुः समुत्थितो नाभेः कण्ठशीर्षसमाहतः ।**
**नासागन्धावहः पुण्यो गान्धारस्तेन हेतुना ॥९॥**

शीर्षशब्देन नासिकोच्यते, नासया गन्धानावहतीति नासा गन्धावहो नासिक्यां गान्धारो वायुस्तन्निमित्तः स्वरो गान्धारः, पुण्यः शोभनः उरस उत्पन्नो हृदयं नाभिंच स्पृशति मध्यम इत्याह ॥९॥

**वायुः समुत्थितो नाभेरुरो हृत्कंठशिरो हतः ।**
**पंचस्थानोत्थितस्यास्य पंचमत्वं विधीयते ॥१०॥**

नाभेरधस्थात् उत्क्रान्तात् मध्येच स्थानादुच्चनीचमवस्थानाच्च मध्यमत्वं, कण्ठादिभ्य उत्पन्नो नाभिहृदयस्पर्शनात् पंचमस्थानः पंचम इत्याह ॥१०॥

**धैवतं च निषादंच वर्जयित्वा स्वरद्वयम् ।**
**शेषात्पंच स्वरांस्त्वन्यान् पंचस्थानोच्छ्रितान्विदुः ॥११॥**

निषादस्य सर्वसन्धिजत्वाद्धैवतस्य मुख्यतया ललाट जत्वेऽपि सर्वसन्धिस्पर्शात्, षड्जस्य षड्स्थानत्वं, शेषाः स्वराः गौणेन मुख्येन च रूपेण पंचस्थानानि स्पृशन्तीत्याह अंतो न षड्जस्य पंचस्थानत्वमेव ॥११॥

स्वाध्यायादौ षाड्जादिस्वरगानानामग्न्यादिरूपतामात्मनि चिन्तयेदित्युच्यते ।

**पंचस्थानस्थितत्वेन सर्वस्थानानि धार्यते ।**
**अग्निगीतः स्वरः षड्ज ऋषभो ब्रह्मणोच्यते ॥१२॥**

**सोमेन गीतो गान्धारो विष्णुना मध्यमः स्वरः ।**
**पंचमस्तु स्वरो गीतो नारदेन महात्मना ॥१३॥**

अग्नीत्यारभ्य अधिष्ठात्र्यो देवता उक्ताः ॥१२॥१३॥

**धैवतश्च निषादश्च गीतौ तुम्बुरुणा स्वरौ ।**
**आद्यस्य दैवतं ब्रह्मा षड्जस्याप्युच्यते बुधैः ॥१४॥**

आद्यो मध्यम गंभीरं स्वरूपंच । तीक्ष्णदीप्तिप्रकाशत्वादग्निदैवतमृषभम् ॥१५॥

**तीक्ष्णदीप्तिप्रकाशत्वादृषभस्य हुताशनः ।**
**गावः प्रगीते तुष्यन्ति गान्धारस्तेन हेतुना ॥१५॥**

गौर्दैवता गान्धारस्य, गान्धारयति सन्निहितं करोतीति गान्धारः, गान्धारोच्चारणेन च सौरभेया गाव उपतिष्ठन्ति गो देवता प्रसादात् ॥१५॥

**श्रुत्वा चैवोपतिष्ठन्ति सौरभेया न संशयः ।**
**सोमस्य पंचमस्यापि दैवतं ब्रह्मराट् स्मृतम् ॥१६॥**

सोमश्चन्द्रमाः । ब्रह्मराट् ब्राह्मणानां राजा पंचमस्य दैवतं सोमस्य यथा कृष्णपक्षेनिर्ह्रासः शुक्लेच वृद्धिरित्येवं षड्ज मध्यमगतस्य पंचमस्थोच्चगीतित्वाद् वृद्धिः स्वरस्यासंभवात्, हानिर्ह्रासः उत्तरस्थानवति सोमसाधर्म्यं अतिसन्धीयते, यस्मादेतान् पूर्वोच्छ्रितान्स्वरान् ॥१६॥

निर्ह्रासो यश्चवृद्धिश्च ग्राममासाद्य सोमवत् ।
तस्मादस्य स्वरस्यापि धैवतत्वं विधीयते ॥१७॥

निषीदन्ति स्वरा यस्मान्निषादस्तेन हेतुना ।
सर्वांश्चाभिभवत्येष यदादित्योऽस्य दैवतमिति ॥१८॥

मध्यमादीनां पूर्वोच्छ्रितानां पूर्वमुत्पन्नानामतिसन्धानानि चारणाद् वा, अतो धैवतः निरोधाकरणात् पिबन्तीति, यथादित्यो ग्रहनक्षत्राणि रुणद्धि एवं निपादे निषीदन्ति अन्तर्भवन्तीव स्वरास्तत्र पर्यवसानेन चाभिभवो अपसारणमिव क्रियते सूर्येणैव ज्योतिषां आदित्योऽस्य धैवतस्य निषादस्यदैवतमित्यर्थः । एवंलौकिके वैदिके च गानसाधारण्येन लक्षणमुक्तमिदानीं सामविशेष उच्यते ।

–इति पंचमी कंडिका–

## षष्ठी कण्डिका

दारवी गात्रवीणाच्च द्वे वीणे गानजातिषु ।
सामिकीगात्र वीणातु तस्याः श्रृणुत लक्षणम् ॥१॥

ओंकारो व्याहृतयः सावित्रीं च पच्छोर्द्धर्चश ऋक्‌श इति साम सावित्री स्वाध्यायी वेदस्यारम्भ काले प्रयोक्तव्येत्युच्यते ॥१॥

गात्रवीणा तु सा प्रोक्ता यस्यां गायन्ति सामगाः ।
स्वरव्यंजनसंयुक्ता अंगुल्यंगुष्ठरंजिता ॥२॥

हस्तौ सुसंयुतौ धार्यौ जानुभ्यामुपरिस्थितौ ।
गुरोरनुकृतिं कुर्याद् यथा ज्ञानमतिर्भवेत् ॥३॥

प्रणवं प्राक् प्रयुंजीत व्याहृतीस्तदनन्तरम् ।
सावित्रीं चानुवचनं ततो वृत्तान्तमारभेत् ॥४॥

व्याहृत्यनुवचनस्य पश्चादनुवचनं स्वाध्यायं ········ वृत्तान्तं हस्तांगुलीषु स्वरारोपणं सम्यग् गीत्यवधारणार्थं-कर्त्तव्यमित्याह ॥४॥

प्रासार्य चांगुलीः सर्वा रोपयेत् स्वरमंडलम् ।
नचांगुलिभिरंगुष्ठमंगुष्ठेनांगुलीः स्पृशेत् ॥५॥

हस्तेन चैव तन्वीरंगुलीः स्पृशेत् ॥५॥

विरला नांगुलीः कुर्यान्मूले चैतान् संस्पृशेत् ।
अंगुष्ठाग्रेण तानित्थं मध्यमे पर्वणि स्पशेत् ॥६॥

पूर्वोक्तं विशिष्यते, अंगुष्ठस्याग्रेण संहतानामंगुलीनां यन्मध्यमं पर्व तत्र संस्पर्शः कार्यः ॥६॥

मात्रद्विमात्रवृद्धानां विभागार्थं विभागवित् ।
अंगुलीभिर्द्विमात्रं तु पाणेः सव्यस्य दर्शयेत् ॥७॥

त्रिरेखा यत्र दृश्येत सन्धिं तत्र विनिर्विशेत् ।
सपर्व इति विज्ञेयः शेषमन्तरमन्तरम् ॥८॥

यवान्तरं तु सामस्वृक्षु कुर्यात्तिलान्तरम् ।
स्वरान्मध्यम पर्वसु सुनिविष्टान्निवेशयेत् ॥९॥

प्रथमद्वितीयस्वरयोर्यवप्रमाणं मध्यमं, साम्नि, तिलमात्र मंगुष्ठतर्ज्जन्योर्मध्यो, मृग्विषये सुनिविष्टानिति, स्वरोच्चारण समकालमेव पर्वस्वंगुष्ठनियोजनं कार्यं, नादौ पश्चाद्वा ॥९॥

नचात्र कम्पयेत् किंचिदंगस्यावयवं बुधः ।
अधस्तनं मृदुन्यस्य हस्तमास्ते यथा क्रमम् ॥१०॥

अंगानां तदवयवानां च कंपो न कार्यः— अधो भवमधस्तनं अंगमूरूजंघादिमृदुन्यस्य, सुखेनावस्थाप्य तत्र हस्तं दक्षिणं वामं च यथाक्रमं परिपाट्या दक्षिणं गोकर्णवद् वाममुत्तानमास्ते तिष्ठतीति ॥१०॥

**अभ्रमध्ये यथा विद्युत् दृश्यते मणि सूत्रवत् ।**
**एषच्छेदो बिवृतीनां यथावालेषु कर्तरि क्षेपकः ॥११॥**

**कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टिं दिशन्मनः ।**
**स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद् बुधः ॥१२॥**

यथा कूर्मोऽङ्गानि संहरति तथाङ्ग-चेष्टां चक्षुरादिदिशन् दिगवलोकनं मनो व्यापारं चोपसंहृत्य सुखासनस्थश्चक्षुरादि व्याक्षेपोपसंहारात् प्रशान्तमनसो व्याकुलतानिवृत्तिः, निर्भयो वर्णाद्युच्चारणं कुर्यात्, दृष्टेर्निधानं कृत्वा शिक्षा शास्त्रे दक्षिण हस्तसन्निवेशः कथ्यते ॥१२॥

**नासिकायास्तु पूर्वेण हस्तं गोकर्णवद्धरेत् ।**
**बिवेश्य दृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयेत् ॥१३॥**

नासिकां नासां मुख्येन दक्षिणहस्तं गोकर्णवत नोत्तानं नाप्यधोमुखं हरेत् कुर्यात्, हस्ताग्रे दृष्टिनिधानं कृत्वा शिष्यः शिक्षाशास्त्रोक्तमर्थं चिन्तयेत् ॥१३॥

**सममुच्चारयेद् वाक्यं हस्तेन च मुखेन च ।**
**यथैवोच्चारयेद् वर्णांस्तथैवैतान् समापयेत् ॥१४॥**

प्रथमादिस्वरोच्चारणं समकालमंगुष्ठयोजनं कार्यं नादौ पश्चाद्वा द्रुतादिक्रियावृत्याप्रारम्भो, यथा प्रारब्धस्तथा मंत्रः समापनीयः, नत्वेकस्मिन्नेवमंत्रे वृद्धिद्वययोजना कार्या ॥१४॥

**नात्याहन्यान्न निर्हण्यान्न प्रगायेन्न कम्पयेत् ।**
**समं सामानि गायेत व्योम्नि श्येनगतिर्यथा ॥१५॥**
**यथाप्सु चरतां मार्गो मीनानां नोपलभ्यते ।**
**आकाशे वा विहंगानां तद्वत् स्वरगताश्रुतिः ॥१६॥**

मत्स्यानां जले, आकाशे च पक्षिणां मार्गे गमनं सामान्येनावगम्यते नतुपादविवरण-पूर्व-कालेन, एवं गीतिमात्रं विनाप्रयत्नेनावगम्यते, न गीतिविशेषोऽवधार्यते, अभिवृत्तवदभियोगात् गीतिविशेषावधारणमित्याह ॥१६॥

**यथा दधनि सर्पिःस्यात् काष्ठस्थो वा यथाऽनलः ।**
**प्रयत्नेनोपलभ्येत तद्वत् स्वरगता[1] श्रुतिः ॥१७॥**

**स्वरात्स्वरसंक्रमस्तु स्वरसन्धिमनुल्वणम् ।**
**अविच्छिन्नं समं कुर्यात् सूक्ष्मं छायाऽऽतपोपमम् ॥१८॥**

प्रथमस्वराद् द्वितीय-स्वरादि-स्वर-गमनं न विच्छेदेन कार्यं, नाप्युल्वणं स्वरस्थानवेगकरणमतश्च समंभवति सूक्ष्मछायातप उपमा यस्य, स्वरसन्धेः, छायाया, आतपस्यच यथा प्रदेशान्तरे सूक्ष्ममविच्छिन्नं संक्रमणं तद्वदित्यर्थः ॥१७॥ कर्षणे दोषषट्कं वर्जयेदित्याह ॥१८॥

---

१. तद्वद्वस्तगतः स्वरइति पाठान्तरम् ।

**अनागतमतिक्रान्तं विच्छिन्नं विषमाहतम् ।
तन्वन्तमस्थितान्तं च वर्जयेत्कर्षणं बुधः ॥१९॥**

प्रथमं स्वरं कर्षयन् द्वितीयस्वरं यदा भवति तदा अनागतं, प्रथमत एवातिक्रान्ते च कर्षणं न कर्त्तव्यं, स्वरमध्ये कार्याविच्छिन्न प्रथमां मात्रां विच्छिद्य कर्षणं कार्यं, विषमाहतं कंपयन्न द्वितीयस्वरं गच्छेत्, तन्वन्तमिति मात्रात्रयातिरेकेण विस्तारणं न कार्यं, अस्थितान्तं चेति द्वितीय स्वरे मात्रात्रययुक्ता स्थितिः कार्या, नत्वेव द्विमात्रा युक्तेति ॥१९॥

**स्वरः स्थानाच्च्युतो यस्तु स स्थानमतिर्तते ।
विस्वरं सामगा ब्रूयुर्विरक्तमिति वीणिनः ॥२०॥**

स्वरः स्थानाच्च्युतो यस्तु स स्थानमतिवर्तते, न स्वरो यदा च्यवतेऽन्यथात्वं गच्छति तदा विस्वरशब्देन तं स्वरं सामगाः कथयन्ति, वीणिनो गायनका विरक्तशब्देन व्यवहरन्ति ॥२०॥

**अभ्यासार्थे द्रु तां वृत्ति प्रयोगार्थे तु मध्यमाम् ।
शिष्याणामुपदेशार्थे कुर्याद् वृत्ति विलम्बिताम् ॥२१॥**

उपदेशार्थं पाठे विलम्बितया वृत्या शिष्याणां सम्यग्ग्रहणं भवति, गृहीतस्य ग्रन्थस्य त्वरितयावृत्या धारणं कार्यं, स्वाध्यायादौ च प्रयोगेण मध्यमा वृत्तिरदृष्टार्थत्वेनोचिता ॥२१॥

**गृहीतग्रन्थ एवं तु ग्रन्थोच्चारणशिक्षकान् ।**
**हस्तेनाध्यापयेच्छिष्यान् शैक्षेण विधिना द्विजः ॥२२॥**

एवमुक्तेन वक्ष्यमाणेन च शैक्षेण विधिनागृहीतो ग्रन्थः सामगानं येन हस्तेन कारणभूतेनशिष्यानध्यापयितुं योग्यो नान्य ग्रन्थोच्चारणाय शिक्षकः ॥२२॥

–इति षष्ठी कण्डिका–

# सप्तमी कण्डिका

पूर्वं क्रुष्टादीनामुत्पत्तिस्थानान्युक्तानि, इदानीमुत्पन्नानामवस्थिति स्थानान्युच्यन्ते ।

क्रुष्टस्य मूर्द्धनि स्थानं ललाटे प्रथमस्य तु ।
भ्रुवोर्मध्ये द्वितीयस्य तृतीयस्य तु कर्णयोः ॥१॥

कण्ठस्थानं तु तुर्यस्य मन्द्रस्योरसि तूच्यते ।
अतिस्वारस्य नीचस्य हृदि स्थानं विधीयते ॥२॥

क्रुष्टः सप्तमपंचम इत्युक्तः, अतिस्वर्यते कनिष्ठामूलं नियत इतिनीचस्वरः षष्ठो निषादः ॥२॥ अंगुष्ठांगुलि योजनं स्वराणांक्रियते उच्चनीचस्वरस्थाने संरक्षणार्थम् ।

अंगुष्ठस्योत्तमे क्रुष्टोऽङ्गुष्ठे तु प्रथमः स्वरः ।
प्रदेशिन्यां तु गान्धार ऋषभस्तदनन्तरम् ॥३॥

अनामिकायां षड्जस्तु कनिष्ठायांच धैवतः ।
तस्याधस्ताच्च योन्यास्तुनिषादं तत्र विन्यसेत् ॥४॥

अपर्वत्वादसंज्ञत्वादव्ययत्वाच्च नित्यशः ।
मन्द्रोहि नहि भूतस्तु परिस्वार इति स्मृतः ॥५॥

मन्द्रात् पृथग् भूतत्वादभावादपर्वत्वं, निषादस्यच अतएव सम्यक् पृथकत्वेन ज्ञानादसंज्ञत्वं अव्ययत्वलिंगविभक्तिवचना योगात्, अतोमन्द्रोहि यस्माद्धि नहिभूतः । हन्विति प्रेरणांप्राप्तः परिस्वारो निषाद इत्युच्यते । षष्ठः हि गताविति लोपमध्यम-पुरुषानुकारणेन प्रेरणं लभ्यते ॥५॥ तरतमशब्दावातिशयः, क्रुष्टादिगीतिश्रवणेन देवादीनां परितोषो भवति, यथा मन्त्रो-च्चारणेन गौतमादीनां, मंत्र संचेतने चाग्न्यादीनामभिधेयाना-मितिस्वाध्यायस्य सर्वोपकारताप्रतिपादनार्थमुच्यते ।

**क्रुष्टेन देवा जीवन्ति प्रथमेन तु मानुषाः ।**
**पशवस्तु द्वितीयेन गन्धर्वाप्सरसस्त्वनु ॥६॥**

**आण्डजाः पितरश्चैव चतुर्थस्वरजीविनः ।**
**मन्द्रं चैवोपजीवन्ति पिशाचासुरराक्षसाः ॥७॥**

**अतिस्वारेण नीचेन जगत्स्थावरजंगमम् ।**
**सर्वाणि खलु भूतानि धार्यंते सामिकैः स्वरैः ॥८॥**

द्वितीयस्यानुपश्चात्तृतीयेन स्वरेण गन्धर्वाप्सरसोजीवन्तीति स्थावरं जंगमंच जीवन्तीतिवर्ततेस्वरविशेषश्रुतिः प्रयोगार्थम-वश्यमवधारयेत्यर्थः ॥६-७-८॥

**दीप्तायता करुणानां मृदुमध्यमयोस्तथा ।**
**श्रुतीनां योऽविशेषज्ञो न स आचार्य उच्यते ॥९॥**

अविशेषस्याचार्यस्याधिको दोषः, न केवलमज्ञत्वात्स्वयं प्रत्यवेति अन्यानपि प्रत्यवायेन योजयतीत्याचार्यं ग्रहणम् ॥९॥

**दीप्ता मन्द्रे द्वितीयेच प्र चतुर्थे तथैवतु ।**
**अतिस्वारे तृतीये च क्रुष्टेतु करुणाश्रुतिः ॥१०॥**

पंचानां स्वराणां दीप्ता श्रुतिः, प्रथमस्य मृदुभूता सप्तमस्य करुणा ॥१०॥

**श्रुतयोऽन्या द्वितीयस्य मृदुमध्यायताः स्मृताः ।**
**तासामपि तु वक्ष्यामि लक्षणानि पृथक् पृथक् ॥११॥**

द्वितीय स्वरस्य पूर्वं दीप्ता श्रुतिरुक्ता, संप्रति श्रुतित्रय-मुपाधिवशेनोच्यते ॥११॥

**आयतात्वं भवेन्नीचे मृदुत्वं तु विपर्यये ।**
**स्वे स्वरे मध्यमत्वं तु तत्समीक्ष्य प्रयोजयेत् ॥१२॥**

नीचे तृतीये स्वरे परतः स्थितेद्वितीय स्वरस्यायता श्रुतिः विपर्यये चतुर्थं स्वरे परे भूते मृदुभूता, स्वे स्वरे स्वरान्तरे अपर भूते मध्यमा श्रुतिः, एवमवधार्यं सामस्वर प्रयोगः कर्त्तव्यः, सन इन्द्रः शिवः सखा, उद्‌द्वेदभिश्रुता भयं वर्त्तोहा इत्युदा-हरणानि, द्वितीये दीप्ता पूर्वोक्ता कदाभवतीत्याह ॥१२॥

**द्वितीये विरता यातु क्रुष्टस्य परतो भवेत् ।**
**दीप्तां तांतु विजानीयात्प्रथमे न मृदुः स्मृता ॥१३॥**

क्रुष्टे परभूते द्वितीये स्वरे या विरताऽवस्थिता श्रुतिः सा दीप्ताह। ओ ऊ वा ॥१३॥

**अत्रैव विरता यातु चतुर्थेन प्रवर्तते ।**
**तथा मन्द्रे भवेद् दीप्ता साम्नश्चैव समापने ॥१४॥**

ई ऊ इत्युदाहरणं प्रथमे स्वरे मृदुभूता यदि तत्रैव विपरीताऽवस्थिता चतुर्थे स्वरेऽवस्थिता मृदुभूता भवति स्वरान्तरानुगमने सति अन्यथा दीप्ता भवति, उग्रा ३ इति तथा मन्द्रे दीप्ता भवति, स्वरान्तर गमने सति एवं सामसमाप्तौ यत्रतत्र स्वरेऽवस्थिता श्रुतिर्दीप्ता भवतीति औ हो ३२ वा ३ हो ३३ हो ३ वा ३ । हा ३३ इडा ३ इत्यादि विरता दीप्ता या श्रुतिर्निषिध्यते ॥१४॥

**ना विरते श्रुतिं कुर्यात्स्वरयोर्नापि चान्तरे ।**
**नच ह्रस्वेच दीर्घे च न चापि घुट संज्ञके ॥१५॥**

स्वरिते अपरि समाप्ता श्रुतिराश्रयतादिनं कार्या, श्रुतेंरभावेऽपि तत्सदृशः स्वर कार्य इत्याह, स्वर परिसमाप्तावप्यविच्छिन्ने गानेस्वरयोर्नान्तरे मध्ये न कार्या, सेन इन्द्रः शिवः सखाइत्युदाहरणे ह्रस्वे दीर्घे चाक्षरे गीयमाने न कार्या, प्लुते एव कार्या ॥१५। घुट संज्ञितं किमित्याह ।

**द्विविधा गतिः पदान्तः स्थित सन्धिः सहोष्माभिः ।**
**पंचस्वेतेषु स्थानेषु विज्ञे यंघुट संज्ञिकम् ॥१६॥**

तालव्यस्य इकारस्य आ इ भाव आ उ भावश्चेति द्वे गती, तयोः श्रुतिर्न कार्या, तथा पदान्तीयोऽपि। त्रिविधः स्थितः सन्धिर्यस्य शषसैरूष्मभिः सह, अत्र दीप्तादिका श्रुतिर्न प्रवर्तते एतेषां घुट इति शब्दान्तरेण सह वर्त्तनात् घुट इत्युच्यते। पंचानांमध्ये यस्य श्रुतिः प्राप्ता तस्यनिषिध्यते न सर्वम् ॥१६॥

**स्वरान्तरा विरतानि ह्रस्वदीर्घं घुटानि च।**
**श्रुति स्थानेष्ववशेषाणि श्रुतिवत् स्वरतो भवेत् ॥१७॥**

स्वरे स्वरान्तरेच अविरते ह्रस्वे दीर्घे घुट संज्ञितेच श्रुतिर्न कार्या, स्वर एव श्रुति सदृशः कार्यः, इति साम व्यतिरिक्तेषु श्रुतिद्वयमेव वर्तत इत्याह ॥१७॥

**दीप्तानुदात्ते जानीयाद्दीप्तां च स्वरिते विदुः।**
**आनुदात्ते मृदुर्ज्ञेया गन्धर्वा श्रुति सम्पदः ॥१८॥**

गान्धर्वगाने श्रुतेरभावेऽपि तत्सदृशः स्वरः कार्य इत्याह। स्वर संपद एतावद् गानादिविषये उदात्तादयस्त्रयः केनचिद्विशेषेण पंचत्वेनोच्यते ॥१८॥

**उदात्तश्चानुदात्तश्च स्वरित प्रचिते तथा।**
**निधातश्चेति विज्ञेया स्वर भेदस्तु पंचधा ॥१९॥**

स्वरितात् पराणि स्वरिताण्येव प्रचय संज्ञानि प्रचये परतः स्थिते स्वरितस्याहननान्निघातः स्वरित एव प्रच ।भावे शुद्ध एव स्वरितोभवति ॥१९॥

– इति सप्तमी कण्डिका –

## अष्टमी कण्डिका

एवं सामस्वरानुषंगेण किंचिदृग्यजुर्विषयं स्वरलक्षणमुक्तं इदानीमार्चिकस्वर निरूपणं प्राधान्येन क्रियते ।

**अतऊर्ध्वं प्रवक्ष्याम्यार्चिकस्यस्वर त्रयम् ।**
**उदात्तश्चानुदात्तश्च तृतीयः स्वरितः स्वरः ॥१॥**

मुख्यतां आर्चिकं प्रचयं निधातादयः स्वरितविशेष एव स्वरितस्य सप्त प्रकारतां प्रतिपाद्यते ॥१॥

**य एवोदात्त इत्युक्तः स एव स्वरितात्परः ।**
**प्रचयः प्रोच्यते तज्ज्ञैर्न चात्रान्यत् स्वरान्तरम् ॥२॥**

**वर्ण स्वारोऽतीत स्वारः स्वरितो द्विविधः स्मृतः ।**
**मात्रिको वर्ण एवंतु दीर्घस्तूच्चरितादनु ॥३॥**

**सतु सप्तविधो ज्ञेयः स्वर प्रत्यय दर्शनात् ।**
**पदेनतु स विज्ञेयो भवेद् यो यत्र यादृशः ॥४॥**

स्वरित उदात्तानुदात्त मध्ये उच्चार्यत इति स्वारः–स्वरित विशेषो रूद्याऽध्येतृभिरुच्यते प्रतीयते विशेषोऽवगम्यते येन स प्रत्यय स्वारः रूप प्रत्ययस्य दर्शनादवगमात्सप्तप्रकारता

ज्ञायते स्वरस्यापि स्वरूप विशेषावधारणं कार्यं मात्र लोपः कार्यं इत्युच्यते ॥२–३–४॥

**सप्त स्वरान् प्रयुंजीत दक्षिणं श्रवणं प्रति ।**
**आचार्यैर्विहितं शास्त्रं पुत्र शिष्यहितैषिभिः ॥५॥**

महता प्रबन्धेन स्वार लक्षणं पुत्राद्युद्देशेनाराद्धयमाचार्यैरतः श्रोत्रपथं सप्तस्वरानेतव्याः दक्षिणस्य प्राधान्यादादरार्थमुपादानं उच्च नीच व्यतिरिक्त स्वरित स्वरूपं नावधार्यते सम्यग् इति तद्विशेषस्वार परिज्ञानं कुतो भवेदिति वोच्यते ॥५॥

**उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा ।**
**वैस्वर्ये स्वार संज्ञायां किं स्थानं स्वार उच्यते ॥६॥**

वैस्वर्ये विशिष्ट स्वरत्वेन या स्वार संज्ञाचेद्विषये किं स्वारस्य स्थानमुदात्तानुदात्त व्यतिरिक्तस्याभावात् अत्रोत्तरम् ॥६॥

**उच्चनीचस्य यन्मध्ये साधारणमिति श्रुतिः ।**
**तं स्वारं स्वारसंज्ञायां प्रति जानन्ति शैक्षिकाः ॥७॥**

उदात्तनुदात्तयोर्मध्यवर्ति यद्रूपं साधारणमित्येवं रूपा श्रुतिः पातं स्वारं स्वारसंज्ञायां विषये शिक्षाध्यायिनः प्रतिजानन्तीति, उदात्तानुदात्तच स्वरितेऽपि षड्जाद्यनुगमो भेदेसति स्वरितस्य भवतीत्युच्यते ॥७॥

**उदात्ते निषाद गांधारावनुदात्त ऋषभ धैवतौ ।**
**स्वरित प्रभावा ह्येते षड्ज मध्यम पंचमाः ॥८॥**

जिह्वामूलीयोपध्मानीययोरपि वर्णैकदेशयोः स्वरयोगः पृथक् पृथगवगंतव्यमिति प्रतिपाद्योच्यते ॥८॥

**यत्र करव परा ऊष्मा जिह्वा मूल प्रयोजना ।**
**तामथाज्ञापयेन्मात्रां प्रकृत्यैव तु सा कला ॥९॥**

जिह्वामूलीयस्य प्रयोजनभूता जिह्वामूलप्रयोजनाः करवौ परौ यस्यास्तां मात्रां आज्ञापयेन्मात्रत्वेनप्रतिपादयेत् यतः प्रकृत्यैव स्वेन रूपेण सा कला न वर्णान्तरस्यैकादेशभूता उपध्मानीयस्योपलक्षणमेतत्, नमः कपर्दिने, च पावमानी-रित्याद्युदाहरणानि स्वार सप्तकं नाम्ना निर्दिश्यते लक्षण भेदेन प्रतिपादनार्थम् ॥९॥

**जात्यः क्षैप्रोऽभिनिहितस्तैरव्यंजन एवच ।**
**तिरोविरामः प्रश्लिष्टः पाद वृत्तश्च सप्तमः ॥१०॥**

**स्वराणामहमेतेषां पृथग् वक्ष्यामि लक्षणम् ।**
**उद्दिष्टानां यथा न्यायमुदाहरणमेव च ॥११॥**

– इति अष्टमी कण्डिका –

इति श्री भट्ट शुभाकर विरचिते शिक्षा विवरणे
प्रथमः प्रपाठकः ॥

# द्वितीयः प्रपाठकः



## प्रथमा कण्डिका

**सयकारं सर्व वाप्यक्षरं स्वरितं भवेत् ।**
**नचोदात्तं पुरस्तस्य जात्यः स्वारः स उच्यते ॥१॥**

सह यकारेण वकारेण यदक्षरं स्वरितं वर्तते अनंतरंवर्त्तते अनन्तरं चोदात्तं तस्य न भवति स स्वारः सजात्यः पद मध्यस्थत्वात् स्वाभाविकः । सजात्येनेति स यकारं भूर्भुवः स्वरिति सवकारम् ॥१॥

**इ उ वर्णौ यदोदात्तावापद्येते यवौ क्वचित् ।**
**अनुदात्ते प्रत्यये नित्यं विद्यात् क्षैप्रस्य लक्षणम् ॥२॥**

इकार उकारो वा उदात्तः पदादिना अकारेणानुदात्तेन संहितायां यकार प्रतीत्या स्वरितो भवति सस्वारः–क्षिपणात् परस्य पूर्वस्य प्रेरणात् क्षिप्र स्वरिते भवतः । श्रुष्टी अग्ने श्रुष्ट्यग्ने, वीडु अंग वीड्वङ्ग इति ॥२॥

**ए ओ आभ्यामुदात्ताभ्यामकारो निहितश्च यः ।**
**अकारं यत्र लुम्पति तमभिनिहितं विदुः ॥३॥**

एकारादोकाराद्वोदात्तादुत्तरयोः सवकारो यो निहितो निपातितः तं यत्र लुम्पति एकारे ओकारेवाऽनुप्रवेशयति

संहितायां तमभिनिहितं पूर्वं यत्र प्रक्षिप्तं स्वारं विदुः, ते मन्वतेत्यादि ॥३॥

**उदात्त पूर्वं यत्किचिच्छंदसि स्वरितं भवेत् ।**
**एष सर्वं बहुस्वारस्तैरव्यंजन उच्यते ॥४॥**

एवं विधाने स्वराणां वहुत्वात् वहुस्वारः सर्वत्रऋग्वेदे यजुर्वेदेच भावात् सवं बहुस्वारः, निरोधोगमनेन व्यंजत इति तैरव्यंजनीयः स्वारः । वि ई तये वीतय इत्यादि ॥४॥

**अवग्रहात्परं यत्र स्वरितं स्यादनन्तरम् ।**
**तिरो विरामं तं विद्यादुदात्तो यद्यवग्रहः ॥५॥**

उपसर्गा विगृह्यन्तेतिङन्तस्य कृदन्तस्य वा पदस्य मकार एव व्यंजनं प्रक्रियते इत्यवग्रह उदस्तः स्यात्, परं स्वरितं तिरो विराम प्राप्तावग्रह स्वारः । विष्कभिते बिस्कभिते इत्यादि ॥५॥

**इकारं यत्र पश्येयुरिकारेणैव संयुतम् ।**
**उदात्तमनुदात्तेन प्रश्लिष्टं तं निबोधत ॥६॥**

इकार उदात्त इकारेणानुदात्तेन यदासंयुक्तोभवति तदा स्वरितः प्रश्लिष्टस्वार उच्यते । यथाहि इन्द्र अधाहीन्द्रेत्यादि ॥६॥

**स्वरे चेत् स्वरितं यत्र विवृता यत्र संहिता ।**
**एतत् पादान्त वृत्तस्य लक्षणं शास्त्र चोदितम् ॥७॥**

स्वरे अक्षरे अकारादौ यत्र चेत् स्वरितसंहिता च पूर्वेण पदेन सह यदा विवृता विभक्ता भवति तदा पादान्तवृत्तः स्वरित अक्षरेऽतः स्वरः सप्तमः । क ई म् कईं वेदेत्यादि ॥७॥

**जात्यः स्वारः सजात्येन श्रुष्ट्यग्ने क्षैप्र उच्यते ।**
**ते मन्वताभि निहितस्तैरव्यंजन ऊ त ये ॥८॥**

**तिरो विरामो विष्कभितें प्राश्लिष्टो ह्रीन्द्रगिर्वण ।**
**पाद वृत्तः कईं वेद स्वाराः सप्तैवमादय ॥९॥**

श्लोकद्वयोक्तान्युदाहरणानि पूर्वमेवोक्तानि ॥८–९॥

**उच्चादेकाक्षरात्पूर्वात् स्वर्यते यदिहाक्षरम् ।**
**स्वाराणां जात्यवर्ज्यानामेषा प्रकृतिरुच्यते ॥१०॥**

जात्यस्वारवर्ज्यमुदात्तादनन्तरं उच्चार्यमाणमक्षरस्वरितः स्वारसंज्ञं भवतीति सामान्येन लक्षणमुक्तम् ॥१०॥

**चत्वारस्त्वादितः स्वाराः कंपं पुष्यन्ति शास्त्रतः ।**
**उदात्ते वैकनीचेवा जुह्वग्निस्तत्र दर्शनम् ॥११॥**

इकारान्त उकारान्त पर उकारद्वय परोकार परः– सन्ध्यक्षर इति चत्वारः स्वारा उदात्तेवा एकस्मिन्नीचे परत आदित आदि भागे कम्पं पुष्यन्ति प्रतिपाद्यन्ते कपिः चलद्रूपः स्वारः कम्प उच्यते, उपत्वाजुहू इति सन्ध्यक्षरोदाहरणं, श्लोकानुरोधाद् व्यवहित उपादानेनोदाहरणमुक्तं उपत्वाजुह्वो ममेत्यादि, जुह्वोग्निस्तत्र दर्शनमिति ॥११॥

– इति प्रथमा कण्डिका –

## द्वितीया कण्डिका

चतुर्णां स्वराणां क्वचिद् ह्रस्वकम्पनात्क्वचिद्दीर्घ कम्पनमित्याह ।

इकारान्ते पदे पूर्वे उकारे परतः स्थिते ।
ह्रस्वं कम्पं विजानीयान्मेधावी नात्र संशयः ॥१॥

इकारान्ते पदे चैवोकारद्वय पदे परे ।
दीर्घ कम्पं विजानीयाच्छग्ध्यूष्विति निदर्शनम् ॥२॥

त्रयो दीर्घास्तु विज्ञेया येच सन्ध्यक्षरेषु वै ।
मन्या पथ्या न इन्द्राद्या शेषा ह्रस्वाः प्रकीर्तिताः ॥३॥

पात्ह्युतु द्वितीययेत्युदाहरणं, उकारपरो ह्रस्वकम्पः शिष्टमन्यदुदाहृतम्–उदात्त सर्वंस्वरितं स्वार इति प्राप्तं क्वचिन्नभवति उदात्तमेव भवतीत्युच्यते ॥१–२–३॥

अनेकानामुदात्तानामनुदात्तः प्रत्ययो यदि ।
शिवकम्पं विजानीयादुदात्तं प्रत्ययो यदि ॥४॥

द्वित्रादीनामुदात्तानामनुदात्तो यदा परोभवति तदा-द्वितीयंतृतीयं चोदात्ते परतः शिवकम्पसंज्ञक आद्युदात्तो भव-

तीतिश्र्यम्बकस्त्रिनेत्रः शिवः तर्ज्जन्यनामिकयोः संयुक्तयो-र्मध्यमांगुली यदाह पृष्ठेवर्तते द्वित्व–योगाच्छिव इवांगुली सन्निवेशः शिवक इत्यध्येत् प्रसिद्धः। आदित्प्रत्नस्येत्यादौ द्वयो-रुदात्तयोः परोऽनुदात्तः। गिरा मर्मा ज्ञातेत्यादौ त्रयाणामुदात्तानां परोऽनुदात्तः शिवक इत्युदात्त विषय संज्ञान् स्वरित विषयमिव विशेषेणोच्यते ॥४॥

**यत्र द्विप्रभृतीनि स्युरुदात्तान्यक्षराणितु ।**
**नीचं चोच्चं च परतस्तत्रोदात्तं विदुर्बुधाः ॥५॥**

नीचमनुदात्तं नीचात्पूर्वमुदात्तं पूर्वस्य पूर्वयोर्वा परत इत्यर्थः। वर्णोच्चारण गत लक्षणमुच्यते ॥५॥

**न रेफे वा हकारे वा द्विर्भावो जायते क्वचित् ।**
**न च वर्ग द्वितीयेषु न चतुर्थे कदाचन ॥६॥**

रेफ हकारयोः ख छ ठ थ फानां घ झ ढ धभानां च केवलानां प्रयोगे भवति, न रेफ द्वित्वादि रूपेणेति कथं। चतुर्थादीनां प्रयोग सयोग इत्याह ॥६॥

**न चतुर्थं तृतीयेन द्वितीयं प्रथमेन तु ।**
**आद्यमन्त्यं च मध्यं च त्वक्षरेणैव[1] पीडयेत् ॥७॥**

ककारादि युक्ताः संयोगे खादय उच्चारणीयाः, गकारादि युक्ताश्च घादयः, प्रतिवर्गमाद्य मध्यान्त्यादि ककारादीनि वर्णानि स्वाक्षरेणैव योजनीयानीतिवा करोतीत्युदाहरणम् ॥७॥

---

१–स्वाक्षरेणैव इति पाठान्तरम् ।

**अनन्त्यश्चभवेत्पूर्वोऽन्त्यश्च परतो यदि ।**
**तत्रमध्ये यमस्तिष्ठेत्सवर्णः पूर्व वर्णयोः ॥८॥**

अनन्त्यो गकारादिः पूर्वोऽन्त्यश्च नकारादिः परतः संयोगे यदा भवति तत्र मध्ये यमो निष्पाद्यो वर्णः पूर्वस्य वर्णस्य सवर्णः सदृश उच्चारणीयः-पूर्व वर्णयोरिति द्विरुक्तत्वापेक्षयोक्तं अग्नऽआयाहि वीतय इत्युदाहार्यम् ॥८॥

**वर्गान्त्याञ्छषसैः सार्द्धमन्तस्थैर्वापि संयुतं ।**
**दृष्ट्वायमा निवर्तन्ते आदेशिकमिवाध्वगाः ॥९॥**

शषस यरलवैः पूर्वैः शदिभिः सह यत्र वर्गान्त्या मकारादयो भवन्ति तत्र यमा न प्रयुज्यन्ते विष्ण व इत्यादि, अध्वगा आदेशिक देशान् वाञ्छित्वं यस्य ते संभाव्यन्ते दृष्टवा चौरं यथा मार्गान्निवर्तन्ते तद्वद यमा इत्यर्थः ॥९॥

**तृतीयश्च चतुर्थश्च चतुर्थादि परं पदम् ।**
**द्वौ तृतीयौ हकारश्च हकारादि परं पदम् ॥१०॥**

संहितायां वर्गतृतीय चतुर्थौ यदा संयुक्तौ वर्णौ तदा पद-काले चतुर्थाद्युत्तर पदं भवति, ननुद्विर्वचनगते तृतीयादि एवं द्विर्वचने सति द्वौ तृतीयौ वर्णौ हकारश्च संहितायां यत्र तत्र पद काले हकारादि परं पदं भवति न तृतीयादितं भवति, वा ग् घ ह ह ह ह इत्युदाहरणीयम् ॥१०॥

**अनुस्वारोपध्म मूलानां च क्वचित्क्रमतेपरम् ।**
**रह पूर्वं संयुते चाप्युत्तरं क्रमतेऽक्षरम् ॥११॥**

अनुस्वारस्य उपध्मानीयस्य जिह्वामूलीयस्य कश्चित् पदे अक्षरं न क्रमते न द्विरुच्यते तं सबाधः । नमः पथे च नमः कपर्दिने इत्युदाहरणानि । रेफेण संयुते सम्बद्धे पदे हकारेण च सम्बन्धे पदे उत्तरमक्षरं क्रमते द्विरुच्यत इति, अर्को देवानां ब्रह्मेत्युदाहरणम् ॥११॥

**संयोगे स्वरितं यत्र चोद्घाते पतनै यथा ।**
**पूर्वाङ्गमादितः कृत्वा पराङ्गादौ निवेशयेत् ॥१२॥**

संयोगे यत् स्वरितमुदात्ते नीचादुपरि गमने पतनेन च उच्चादधो गमने स्वरितस्य व्यंजनं पूर्वाङ्गमादौ नीचे उच्चत्वं कृत्वा पराङ्गस्यादौ स्वरितं निवेशयेदुच्चारयेदित्यर्थः । पूर्वं पराङ्ग विवेकार्थमुच्यते ॥१२॥

**संयोगे यत्र दृश्येत व्यंजनं विरते पदे ।**
**पूर्वाङ्गं तद् विजानीयाद् येनारम्भस्तत् परांगम् ॥१३॥**

संयोगे विरते विभक्ते यद् व्यंजनं उत्तरपदेनासंलग्नं दृश्यते तत् पूर्वपदस्यांगमिव, तस्यैकदेशः येन व्यंजनेन विभक्ते संयोगे उत्तर पदस्यारंभस्तत् पराङ्गम्, भूर्भुवः स्वस्तत्सवितु-रित्युदाहरणे नीचोच्चयोः ॥१३॥

**संयोगात्तु परं स्वर्यं परं संयोग नायकम् ।**
**संयुक्तस्य तु वर्णस्य स्वरितं पूर्वमक्षरम् ।।१४।।**

संयोगपरोभागः स्वरयुक्तः कार्यः स्वरस्य तत्रविश्रान्ति प्रधानत्वात्पूर्वं व्यंजन संयुक्तस्य पूर्वव्यंजनमस्वरं प्रयोक्तव्यं, उदाहरणद्वयमुक्तम् ।।१४।।

**अनुस्वारः पदान्तश्च क्रमजः प्रत्यये स्वके ।**
**स्वरभक्तिस्तथा रेफः सर्व पूर्वाङ्गमुच्यते ।।१५।।**

संभवतीत्यनुस्वारः पदान्तश्च ककारादि प्रत्यये स्वके सवर्णपदे परतः क्रमजो द्विर्वचनं जातमुद्वहतीति, अथ समर्हतीति हकारे रेफरूपास्वरभक्तिः एतत् पूर्वांगम् ।।१५।।

**पादादौ च पदादौ च संयोगावग्रहेषु च ।**
**यः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः ।।१६।।**

पादपद संयोगावग्रहेषु द्विरुक्तौ यकारः प्रयोक्तव्यः अन्यस्तु केवलः । यज्ञायज्ञादौ, त्वं यविष्ठेति, पदादौपन्यं पन्यं, संयोगे अन्यः, अनूप इत्यवग्रहे, वीतय इत्यादौ लघु यकारः ।।१६।।

**पादादा वप्य[१] विच्छेदे संयोगान्ते च तिष्ठताम् ।**
**वर्जयित्वा रहयाणा मयादेशः प्रदृश्यते ।।१७।।**
**स्व संयुक्तो गुरुर्ज्ञेयः सानुस्वाराग्रिमः स्फुटः ।**
**अणु शेषोध्रिगोर्वाऽपि युगलादि रविस्फुटः ।।१८।।**

अनयोर्भाष्यं त्यक्तम् ।

– इति द्वितीया कण्डिका –

---

१–पादादावप्य इति पाठांन्तरम्

## तृतीया कण्डिका

**यदुदात्तमुदात्तं तद् यत् स्वरितं तत्पदे भवति नीचम् ।**
**यन्नीचं नीचमेव तद् यत् प्रचयस्थं तदपि नीचम् ॥१॥**

यदुदात्तं संहिता कालेऽनुदात्तंच भवति तस्यकाले अनुदात्तमेव उदात्तमेव भवति, यत्तु स स्वरितविशेषो वा प्रचयः स नीचः पदे भवति, अग्न आयाहि वीतये इत्युदाहरणम् ॥१॥

**अयमग्निः सुतो मित्रमिदं वयमथा वहाः ।**
**प्रियं दूतं घृतं चित्तमभिशब्दश्च नीचतः ॥२॥**

एतानि पदानि नीचादनुदात्तादारभ्यन्ते, अग्निं वः सुतोगवा, अयते अग्निं वः स सुतः, मित्रं हुवे इदंवमो, वयंद्याआयाते वहां। प्रियं मित्रं दूतं वः, घृतं दुहते वितमे, अभिप्रियाणि इत्युदाहरणानि ॥२॥

**अर्क्केष्वेव सुतेष्वेव यज्ञेषु कलशेषु च ।**
**शतेषु[१] स पवित्रेषु नीचादुच्चार्यते श्रुतिः ॥३॥**

अर्क्के अर्च्चंतु इत्यादयोऽर्वाः। सुतेषुनः सुते सचेति सुतादयः यज्ञाय। तस्या यज्ञाः–कलशं कलशेष्वित्यादयः, कलशाः

---

१–सवनेष्ट सपत्नेषु इत्यपि पाठः ।

शतंहिमाः शतमित्यादयः, शतंसेनाः शताः, पवित्रं ते पवित्रमर्चि इत्यादयः पवित्राः इत्यादीनां नीचादनुदात्तादुपक्रमः ॥३॥

**हरि वरुण वरेण्येषु धारा पुरुषेषु च स्वरित रेफः ।**
**विश्वानरो नकारश्च शेषारस्वरिता नराः ॥४॥**

हरि हिन्वन्ति, वरुणोमित्रः, वरेण्यं, धारा सुतस्य, सहस्र शीर्षा पुरुषः, एतेषु रेफस्यैव स्वरितत्वं विश्वानरस्येति नकारस्य, अन्यत्र नर शब्देषुरेफस्यैव स्वरितत्वम् ॥४॥

**द्वौवर्णावस्वरित वदुदुत्तमत्वं वरुण ।**
**धाकारे चोरु धारायामुरुधारेवदोहने ॥५॥**

उदुत्तमं वरुणेति वकारस्य स्वरितत्वं न रेफस्य, उरुधारा-मरंकृतं, उरुधारेव दोहन इति धाकारस्य स्वरितत्वम् ॥५॥

**मात्रिकं वा द्विमात्रं वा स्वर्यते यदिहाक्षरम् ।**
**तस्यादितीऽर्द्धमात्रा वैशेषंतु परतो भवेत ॥६॥**

पूर्वाङ्गमिति वर्णापेक्षयोक्तं, स्वरापेक्षयेदमुच्यते, ह्रस्वस्य दोर्घस्य वा स्वरितस्यार्थं मात्रोदात्तानुदात्तानां पूर्वोभागः शिष्टं स्वरितं "तस्यादित उदात्तमर्द्धं ह्रस्वमिति" पाणिनिः ॥६॥

**अदीर्घं दीर्घवत्कुर्यात् द्विस्वरं यत्प्रयुज्यते ।**
**कम्पोत्स्वरिताभिगीतं ह्रस्व कर्षणमेवच ॥७॥**

कम्पादिविषये ह्रस्वकर्षणमेवच कम्पादिविषये ह्रस्वाणां दीर्घसादृश्यं कुर्यात्, पात्युत उद्रूजं, स्वरितं नीचादुपरि स्थित-मुत्स्वरितं भूर्भुवः उ ई वो ३३ पन्यतेत्यभिगीतं, तत्यजमिति ह्रस्व कर्षणम् ॥७॥

**निमेषकाला मात्रा स्याद्विद्युत् कालेति चापरे ।**
**ऋक्स्वरा तुल्ययोगा वा मतिः स्यात् सोमशर्मणः ॥८॥**

मात्रास्वरूपमुच्यते, अक्षिपक्ष्मपातं निमेषः–तत्काला मात्रा विद्युत्काल मात्रेति केचिदाचार्याः, सोमशर्मण आचार्यस्य ऋकार कालः छकालः शकार तुल्योवेति द्रुतमध्य विलम्वेन व्यवस्था कार्या ॥८॥

**१ समासेऽवग्रहं कुर्यात्पदं चात्रानुसंहितम् ।**
**यतोऽक्षरादिकरणं पदान्ते तस्य तं विदुः ॥९॥**

समासपदमेकविषयं तत्रावग्रहे यदि विभागं कुर्यात् समासं पदं चानुसंहितमत्र सन्धेयं, यतोऽक्षरादि करणं मध्ये तारं कुर्वन्ति स्वरान्तं तं समासपदस्य विदुः । हव्य दातयऽइति हव्य । दातये । विश्ववेदसमिति विश्ववेदसं इत्यादि, पूर्वाचार्यापेक्षया इति करणान्तरा, कात्यायनस्तु हव्यदातय इति ॥९॥

**सर्वत्र पुत्रमित्रसखिशब्दा अद्रिशतक्रतोरवग्राह्याः ।**
**आदित्यविप्रजातवेदाश्च सप्तति गोपतिवृत्रहा-**
**समुद्राश्च ॥१०॥**

एते शब्दाः अवग्रहाः प्रवर्तन्त इति संशयो नास्ति ॥१०॥

स्वर्युवो देवयुवश्चारतिन्देवतातये ।
चिकितिश्चुकृ धञ्चैव नावगृह्णन्ति पण्डिताः ॥११॥

स्वःर्युवं देवयुव इतिक प्रत्ययान्तो न पदद्वयं, अरतिमिति ननञ् अन्ते नूपपर्यामि-वारणेष्विति धातोरूपं, देवताति प्रत्यये देवताभिः, चिकितिरितिचेन्नातः, चुकृधमिति कृधेद्धिर्वंचनं अत एकपदत्वादेतेषामवग्रहं न कुर्वन्त्याचार्याः ॥११॥

– इति तृतीया कण्डिका –

# चतुर्थी कण्डिका

विवृत्तयश्चतस्रो वै विज्ञेया इति मे मतम् ।
अक्षराणां नियोगेन तासां नामानि मे श्रृणु ॥१॥

ह्रस्वादिर्वत् सानुसृता वत्सानुसारिणी वाग्रे ।
पाकवत्युभयोर्ह्रस्वा दीर्घवृद्धा पिपीलिका ॥२॥

विवेकेन पृथग् भावेन वर्तत इति विवृत्तिः पूर्व पदे ह्रस्वः उत्तर पदे दीर्घ इति ह्रस्वादिवत् सा न च लघुना, गौर्विवृद्धा अनुसृता, अग्न आयाहि इत्यादिका, अग्ने आदौ दीर्घं यस्य परत्वे ह्रस्वाः सा सवत्समिवानुसरतीति वत्सानुसारिणी, प्रेष्ठं वो अतिथिमित्यादिका । उभयोः पदयोराद्यन्तयोः ह्रस्वो यस्याः सा पाकवती वपुहा द्वययोगात् अग्न इत्थेतरा गिर इति यथा, उभयत्र दीर्घाभ्यां विवृद्धा पिपीलिकेच भागगुरुत्वेन दीर्घवृद्धापिपीलिकेति नि छ एवाना आयुधानीवेति यथा ॥१-२॥

चतसृणां विवृतीनामन्तरं मात्रिकं भवेत् ।
अर्धमात्रिकमन्येषामन्येषामणुमात्रिकम् ॥३॥

शारवाभेदाभिप्रायेण मध्यविकल्पः ॥३॥

**आपद्यते मकारो रेफोष्मसु प्रत्ययेष्वनुस्वारम् ।**
**यलवेषु परसवर्णं स्पर्शेषु चोत्तमापत्तिम् ॥४॥**

मावां राति, तं सख्यय:, उद्वंशमिव । इत्यादौ रेफोष्मसु परतो मकारो अनुस्वारत्वं । यविष्ठ तं लोकं तंव इत्यादौ यवलेषु परसवर्णता समहेम विधतद्राणमित्यादौ स्पर्शेषु परतः स्पर्शवर्ग सदृशोत्तमापत्तिर्मकारस्य भवतीत्यर्थः ॥४॥

**नकारान्ते पदे पूर्वे स्वरेच परतः स्थिते ।**
**अकारं रक्तमित्याहुर्नकारेण तु रज्यते ॥५॥**

यकार व हकारेषु परतोऽनुरज्यते, सापना तव यजामहे इस्वरे परे अंत्योनकारेणाकारः पूर्वोरज्यते वरामहां इत्युदाहरणं, नकारान्तस्य पदस्यार्द्धमात्रेण नकारेणार्द्धमात्रा आकारादिकस्य वर्णस्य रज्यत इत्यर्थः तान्यथाऽनुरज्यते ॥५॥

**नकारान्ते पदे पूर्वे व्यंजनैश्च यवो हिषु ।**
**अर्धमात्रा तु पूर्वस्य रज्यते त्वणुमात्रया ॥६॥**

नकारान्तस्य पदस्यार्द्धमात्रेण नकारस्यार्द्धमात्राकारादि वर्णस्य रज्यत इत्यर्थः, नान्यथा तन्वो ऋच्छन्तान्ह्यश्मसीत्यादि ॥६॥

**नकारः स्वरसंयुक्तश्चतुर्युक्तो विधीयते ।**
**रेफोरङ्गश्च लोपश्चानुस्वारोऽपि वा क्वचित् ॥७॥**

पदान्तस्य नकारस्य पदे परतश्चत्वारिरूपाणि भवन्ति, भवाँश्चिनोतीति, नकारस्य रेफो विसर्जनीयत्वं पूर्वस्यानुनासिक इति रेफोदाहरणं, रङ्ग पूर्वमुदाहृतः महां इन्द्रः दधन्वां य इत्यादौ नकारस्य लोपः पूर्वस्यानुनासिकः "अनुनासिकात्परोऽनुस्वारो वा" भवतीति रङ्गस्वरूप दर्शनं क्रियते ॥७॥

**हृदयादुत्तिष्ठते रङ्गःकांस्येन समनिःस्वरः[१] ।**
**मृदुश्चैव द्विमात्रश्च दधन्वाँ इतिदर्शनम् ॥८॥**

**यथा सौराष्ट्रिका नारीअराँ इत्यभिभाषते ।**
**एवं रङ्गः प्रयोक्तव्यो नारदस्य मतं यथा ॥९॥**

सुराष्ट्र देशे भवास् सौराष्ट्रिकाः स्पष्टार्थमन्यत् ॥९॥

– इति चतुर्थी कण्डिका –

(१) निस्वनः इत्यपि पाठभेदः

## पंचमी कण्डिका

**स्वरा गडदबाश्चैव ङणनमाः सहोष्मभिः ।**
**चतुर्णां पदजातीनां पदान्ता दश कीर्तिताः ॥१॥**

स्वराः अकारादयः गडदवा ङ ण ना माश्चाष्टौउष्माणौच पकार सकारौ इति दशपदान्ताः पादैः सहभवन्तीत्यर्थः चवर्ग वर्गाज्जकारः टवर्ग वर्गाढ्ढर सकारः पदान्तः पादैः सह न सम्बध्यन्ते, क, च, ट, त पानां पदान्तरेण सम्बन्धो अति प्रसिद्ध-स्वान्नोच्यते, ख छ ठ थ फा घ झ ढ ध भाश्च न सम्बध्यन्ते, शकारहकारौ चोष्म मध्यान्न सम्बध्यते इति, पदान्ता दशे-त्युक्तं नामाख्यातोपसर्ग निपाताश्चत्वारि पदजातानि उदा-हरणानि, अग्ने आयाहि, इम इन्द्रेत्यादि स्वरा पदान्ताः, वाग् ड् ह ह ह ह, विभाड्वृहत् तदिन्द्र, त्रिष्टुविह य इति केचित्तां त्वं कवित्वं जनासो, तन्नो मित्रः, त्वं भरामसि, निष्यपीभुवः स्वरिति गादयो दश ॥१॥

**स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च ।**
**व्यंजनान्यनुवर्तन्ते यत्र तिष्ठति स स्वरः ॥२॥**

**स्वर प्रधानं त्रैस्वर्यं[१] माचार्याः प्रतिजानते ।**
**मणिवद्व्यञ्जनं विद्यात्सूत्रवच्च स्वरं विदुः ॥३॥**

---

(१) वैस्वर्यमित्यपि पाठः

दुर्बलस्य यथा राष्ट्रं हरते बलवान् नृपः ।
दुर्बलं व्यञ्जनं तद्वद् धरते बलवान् स्वरः ॥४॥

ओभावश्च विवृतिश्च शषसा रेफ एवच[१] ।
जिह्वामूलमुपध्माच गतिरष्टविधोष्मणः ॥५॥

स्वर प्रत्यया विवृत्तिः संहितायां तु या भवेत् ।
विसर्गस्तत्र मन्तव्यस्तालव्यो वाऽत्र जायते ॥६॥

सन्ध्यक्षरोपधे सन्ध्यौ प्राप्तलुप्तौ यवौ यदि ।
व्यंजनाख्या विवृत्तिस्तु स्वराख्या प्रकृति[२] संहिता ॥७॥

ऊष्मान्तं विरते यत्र सन्धौवो भवते च यत् ।
विवृत्तिर्या भवेत्तत्र स्वराख्यान्ता[३] विनिर्द्दिशेत् ॥८॥

यद्योभाव प्रसंधानमुकारादि परं पदम् ।
स्वरान्तं तादृशं विद्यात् यदन्यद् व्यस्तमूष्मणः ॥९॥

ओ भावः प्रसन्धानमोकारं तस्य यदा प्रसन्धानता भवति तदा उकारादि परं पदं भवति, स्वरान्तंच तादृशं सन्धानं भवति, वायो ऋ इति, क इह मित्यादि ऊष्मणः सन्धानम् ॥९॥

---

(१) वेत्यपि पाठः । (२) प्रति संहिता-इत्यपि पाठः ।
(३) स्वराख्याती-इत्यपिपाठः ।

**प्रथमा उत्तमाश्चैव पदान्तेषु यदि स्थिताः ।**
**द्वितीयं स्थानमापन्नाः शषस प्रत्ययोः यदि ॥१०॥**

शषसादिषु परतः प्रथमास्तकारादयः उत्तमाश्चमकारादयो यदा पदान्तास्तदाद्वितीयं स्थानन्तंकारादिस्तपतामापन्ना भवन्ति, तस्य विष्णुः तां समन्तमित्यादि, यदा संयुक्ता द्वितीयानिवदर्शयेत् ॥१०॥

**प्रथमामूष्मसंयुक्तां द्वितीयानिच दर्शयेत् ।**
**न चैनां प्रतिजानीयाद्यथा मश्यः क्षुरोप्सरा ॥११॥**

सकारादिषु परतस्तकारादयो द्वितीय थकारादि सदृशा वृ उच्चारणीया नतु द्वितीया एव स्फुटमुच्चारणीयाः गायत्र्यादिच्छन्दादि स्वरूपं सामान्येन प्रतिपाद्यते ॥११॥

–इति पंचमी कण्डिका–

# षष्ठी कण्डिका

**छन्दोमानं च वृत्तं च पादस्थानं त्रिकारणम् ।**
**ऋच: स्वच्छन्द वृत्तास्तु पादास्त्वक्षर मानश: ॥१॥**

पादस्थाने पदान्तो मन्त्र: श्लोकश्चत्रिकारणं पदान्तं छन्दोगानं च वृत्तं चेतित्रीणि कारणानि, लौकिकं श्लोकादि गुरु लघु परिज्ञानं गायत्र्यादि स्वरूपमवधार्यत, ऋचां तु स्वाभाविकं गायत्र्यादि छन्द: गुरुलघोरक्षरं छन्दो वृत्तमक्षरगणनया मानं छन्दो विभागावगमायावस्थितमिति नातीव छन्दो लक्षणेनेह प्रयोजनं, स्वच्छन्दो वृत्तं च सामानीति स्वच्छन्दोवृत्तमक्षराणां मात्रेणाक्षरमानशः ॥१॥

**ऋवर्णं स्वरभक्तिच छन्दोमानेन निर्द्दिशेत् ।**
**प्रत्ययेन सहारेफं मिमीत स्वरभक्तिषु ॥२॥**

ऋकारे स्वरे स्वरे यो रेफः स्वरभक्तावसौ रेफ: स्वरभक्तौ च यन्मात्राधिक्येनाक्षर गणनाया:, छन्दो भागेच गणनीयमक्षराणां तरत्वात्–अर्षसि अर्हसीत्यादिस्वरभक्तिविषये अरेफं अपृथग्भूतरेफंवर्णंमिमीत गणयेदिति ॥२॥

**ऋवर्णे तु पृथग्रेफ: प्रत्ययस्तु पृथग्भवेत् ।**
**विद्याल्लघुमृकारंतु यदि तूष्मणा संयुत: ॥३॥**

ऋवर्णे एकस्मिन्नेव रेफमात्रा व्यंजनरूपा प्रतीयते, तेन स्वररूपमक्षरमिति प्रत्ययो मात्रैकदेशोऽवधार्यते न पृथग्वर्ण द्वयम् । प्रत्ययस्तु पृथग् भवत् विद्याल्लघु मृकारं ऊष्माण ऋवर्णो यदि असंयुतो न सम्बद्धस्तदा लघु स्वराख्यो वर्णो विज्ञायते ॥३॥

**ऊष्मणैव हि संयुक्त ऋकारो यत्र पीड्यते ।**
**गुरुवर्णः स विज्ञेयः स्वृचं चात्रानुदर्शनम् ॥४॥**

ऋकार ऊष्मणैव शकारादिना सम्बध्यमान स्वरोऽपि गुरुर्भवति न लघु स्वृच[1] मित्युदाहरणम् ।४॥

**ऋषभंच गृहीतं च वृहस्पति पृथिव्यां च ।**
**निर्ऋति पञ्चमा ह्यत्र ऋकारा नात्र संशयः ॥५॥**

निर्ऋति पंचमो येषां ते ऋषभादयः ऋकारा विकाराः स्वरा विज्ञेयाः ॥५॥

**शषस हरादौ रेफ। स्वरभक्तिर्जायते द्विपदा सन्धौ ।**
**इ उ वर्णाभ्यां हीना क्वचिदेकपदा क्रम वियुस्ता ॥६॥**

श ष स हानां र आदिर्यस्य तच्छपस हरादिपरं तत्र एकपदा स्वरभक्तिर्जायते किं भूता इत्याह ।

(१) स्तृचमिति पाठान्तरम् ।

इ उ वर्णाभ्यां हीना अर्षसीति इकारहीनां अर्षसीति, उ वर्ण-हीनां अर्षसीत्येवं प्रयोक्तव्येत्यर्थः । क्वचिदेक पदा उपोह्-मीयमिति एषा एक पदा भूतपूर्वापर विभागः क्रमयुक्ता ॥६॥

**स्वर्भक्तिर्द्विविधा ऋकारो रेफ एवच ।**
**स्वरोदा व्यञ्जनोदाच विहिताऽक्षर चिन्तकैः ॥७॥**

स्वरादुदेतीति स्वरोदा ऋकाराख्या व्यंजनादुदैतीति व्यंजनोदा रेफाख्या ॥७॥

**शषसेषु स्वरोदायां हकारे व्यञ्जनोदयम् ।**
**शषसेषु विवृत्तां तु हकारे संवृतां विदुः ॥८॥**

शषस विषये स्वरोदयां विवृतां च स्वरभक्ति विदुः, अर्षसीत्यादि हकार विषये व्यंजनोदयां संवृत्तां च जानन्ति अर्हसीति ॥८॥

**स्वरभक्ति प्रयुञ्जान स्त्रीन्दोषान्परिवर्जयेत् ।**
**इकारं वाप्युकारं च ग्रस्तदोषं तथैव च ॥९॥**

इ उ वर्णाभ्यां हीनेति यदुक्तं तदेव सविशेषमुच्यते, अर्षसि अर्हतीति स्थान–करण–निष्पीडनेन प्रयोक्तव्य-मित्यर्थः ॥९॥

**संयोगपरं छपरं विसर्जनीयं द्विमात्रिकं चैव ।**
**अवसानिकं च न लघु सानुस्वार घुटान्तं च ॥१०॥**

संयोगः परो यस्याक्षरस्य छात्परं विसर्जनीयमक्षरं, द्वेमात्रे यस्याकारादेस्तद् द्विमात्रिकं, अवसाने भवमवसानिकं सहानुस्वारो वर्तत इति सानुस्वारं द्विधा गतिर्यस्य ॥१०॥

—इति षष्ठी कण्डिका—

## सप्तमी कण्डिका

वेदे श्लोकादिना वृत्तं भवतीति गुरुवर्णा: नतुपथ्यादि गाथावधारणं छन्दो लक्षणत: कर्त्तव्यमित्युदाहरण रूपेणोच्यते ।

**पथ्या पाद: प्रथमो द्वादश मात्रस्तथा तृतीयोऽपि ।**
**अष्टादशो द्वितीय: समापन: पंचदशमात्र: ॥१॥**

पूर्वपाद: सप्ताक्षरो द्वादशमात्रो, द्वादशमात्रस्तथा तृतीयोऽपीति, एकादशाक्षरोऽष्टादशमात्रो द्वितीय: पाद:, समापनोऽन्तिमश्चतुर्थो दशाक्षर: पंचदशमात्र: ॥१॥

**पथ्या लक्षणमुक्तं या त्वन्या सा स्मृता विपुला ।**

पूर्व लक्षणेन विपुलादिपाद विधानं, समाप्तिरूपो दशाक्षरश्चतुर्थ: पादो द्वादशमात्र: समापन:, पुन: पंचदश मात्र इति सकारादिका: पंचेतिपथ्याया यल्लक्षणं तदेव विपुलाया:, किन्तु यस्त्वन्येति पंचदश मात्र: पादे द्वितीये इतिपादव्यत्यासा भेदो यच्छेष: ।

**अक्षराणाँ लघु ह्रस्वा संयोगपरं यदि ।।२॥**
**तत्संयोगोत्तरं विद्याद्गुरुदीर्घाक्षराणि तु ।**

गुर्वक्षराणां मध्ये यद् ह्रस्वं तल्लघु मद्ध्रस्वं तल्लघु, संयोग परं दीर्घाणि चाक्षराणि गुरूणिच ।

**विवृत्तिर्यत्र दृश्येत स्वारस्यैवाग्रतः स्थिता ॥३॥**
**गुरुस्वारः स विज्ञेयः क्षैप्रस्तत्र न विद्यते ।**

विवृत्तिः परभूतः स्वरोगुरुः । न क्षैप्रो न लघुरित्यर्थः ।

**अष्टप्रकारं विज्ञेयं पदानां स्वर लक्षणम् ॥४॥**

**अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्तं नीच स्वरितम् ।**
**मध्योदात्तंस्वरितं द्विरुदात्तमित्येता अष्टौ पदसंज्ञा ॥५॥**

अष्टावेव प्रकाराः संभवन्तीति तत्रोदाहरणानि प्रदर्श्यन्ते ॥५॥

**अग्निः सोमः प्रवोवीर्यं हविषा स्ववंनस्पतिः ।**

अग्निष्टत्रणीति अग्निरन्तोदात्तः, सोमः पवते इति सोम आद्युदात्तः, प्रवीयह्वमिति प्रउदात्तः, व इत्यनुदात्तो, वलंन्युञ्जं वीर्यमिति वीर्यं नीच स्वरितं, हविषा मध्योदात्तं हविषा विधेयेति भूर्भुवः स्वरिति स्वः स्वरितं, वनस्पतिरिति वकारः स्पकारश्चद्वे उदात्ते ।

**अन्तर्मध्यमयोर्योनाम्युदमनुदनिपाते ॥६॥**

आद्यात्स्वरितमुपसर्गे द्विर्नीचमारद्यात इति ॥६॥

**स्वरितात्पराणि यानि तानि स्युर्धार्याक्षराणितु ।**
**सर्वाणि प्रचयस्थान्युपोदात्तं निहन्यते ॥७॥**

निहोता सत्सीति स्वरितात्तकारात्त्वक्षराणि सत्सीति धार्याएवाक्षराणि इत्यूद्ध्वंमधश्चागतानि प्रचयस्थानानि स्वरितस्य प्रचितत्वात् अपोदात्तमुपोदात्तमाद्यं स्वरितं निहन्यते गान्धारगीत्योच्चर्यंत इति एतदेव विशेषत उच्यते ॥७॥

**प्रचयो यत्र दृश्येत तत्र हन्यात्स्वरं वुधः ।**
**स्वरितः केवलो यत्र मृदुं तत्र निपातयेत् ॥८॥**

प्रचये तत्र आहननं वर्हिषीति प्रचयाभावे केवलस्य स्वरितस्य मृदुत्वम् ॥८॥

**पंचविधमाचार्यकं नाम मुखन्यासः करणं प्रतिज्ञोच्चारणा ।**
**अत्रोच्यते श्रेयः खलु वै सं प्रतिज्ञोच्चारणा ॥९॥**

आचार्यकं पंचप्रकारं, नामेति हस्ताग्रे दृष्टिनिवेशादि, मुखन्यासोऽङ्गुष्ठांगुल्यादौ स्वर निवेशः, कारणं शिक्षाशास्त्रं, प्रतिज्ञा गुरुपरंपरागतं मंत्ररूपावधारणं, लक्षणागमानुसारेण प्रयोग उच्चारणं, सम्यक् शास्त्रं यद्यपि न दृश्यते तथाऽप्यागमावधारणमवश्यं कर्तव्यमितिश्रेयः खलु । प्रतिज्ञानोच्चारणेति एतदेव विशेषेणोच्यते ॥९॥

**यस्य कस्यचिद्वर्णस्य करणं नोपलभ्यते ।**
**प्रतिज्ञास्तत्र वोढव्याः करणं हि तदात्मकम् ॥१०॥**

वर्ण स्वरादि विषयं करणं शिक्षादिशास्त्रंन ज्ञायते तथाऽप्यागमोऽयं ततोऽवधारणीयं, प्रतिज्ञा तत्र वोढव्या करणस्यायमपूर्वकं लक्षणं साम्नां, यत्र लक्षणं लौकिकानामपि शब्दानां व्याकरणाख्यं लक्षणं प्रयोगभूतमभ्युपगम्यते इति उच्यते करणंहितदात्मकमिति,लक्षणमनुसृत्य स्वस्ववर्णोच्चारणं-यत्नतः करणीयं नारदादीनामप्येतद् यत्नतोऽवधारणीय-मित्याह ॥१०॥

**तुम्बुरु नारदवसिष्ठ विश्वावस्वादयश्च गन्धर्वाः ।**
**सामसु निभृतं कारणंॐस्वर सौक्ष्म्यात्तेऽपि हिनकुर्युः ॥११॥**

निभृतं परिपूर्णकरणलक्षणं तेऽपि हि नकुर्यः न योजयितुं शक्नुवंतीत्यर्थः ॥११॥

॥ इति सप्तमी कण्डिका ॥

## अष्टमी कण्डिका

शरीर वाङमनोनियमनिरूपणं सम्यक् पाठसिद्धिरधि क्रियते ।

**कौक्षेयाग्नि सदा रक्षेदश्नीयादशनं हितम् ।**
**जीर्णाहारः प्रबुद्धः सन्नुषसि ब्रह्म चिन्तयेत् ॥१॥**

कुक्षौ भवं कौक्षेयं उदराग्नि हितपथ्याशनेन चाग्ने रक्षा परिणते चाहारे ब्रह्मणश्चिन्तनम्, वाङमनोव्यापारेणावधारणं कार्यम् ॥१॥

**शरद्विषुवतोऽतीतादुषस्युत्थानमिष्यते ।**
**यावद्वासन्तिकी रात्रिर्मध्यमा पर्युपस्थिता ॥२॥**

शरन्मध्ये यो विषुवान् तस्मादतीतात् उषसिरात्रिशेषे पाठार्थं उत्थानमिष्यते यावद्वासन्तिकी वसन्त मध्येभवा पर्युपस्थिता प्राप्ता रात्रिस्तावदुत्थाने रात्रेर्महतीत्वात् ॥२॥

**आम्रपालाशबिल्वानामपामार्ग शिरीषयोः ।**
**वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥३॥**

ततः सन्ध्योपासन कार्यम् ॥ ३ ॥

**खदिरश्च कदम्बश्च करवीरकरञ्जयोः ।**
**सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥४॥**

खदिराणामवयवाः पुण्याः कंटकिनः क्षीरिणोऽकंटका यशस्विनः ॥ ४ ॥

**तेनास्य करणं सौक्ष्म्यं माधुर्यं चोपजायते ।**
**वर्णांश्च कुरुते सम्यक् प्राचीनौदंव्रजिर्यथा ॥५॥**

शाकादिना ताम्बूलभक्षणं प्रसिद्धम् तेनस्वरादिना अस्यपुंसः करणे वाचि सौक्ष्म्यं श्लेष्मनिवृत्या गुरुत्वंच निवर्तते । सूक्ष्मा मधुरा च वाक्सम्पद्यते, वर्णांश्च -कंठादि स्थानेषु सम्यग्भूता-निष्पादयतीत्येवं प्राचीनौदंव्रजिराचार्योमन्यते ॥५॥

**त्रिफलां लवणाख्येन भक्षयेच्छिष्यकः सदा ।**
**अग्निमेधाजनन्येषा स्वरवर्णकरी तथा ॥६॥**

त्रिफलां लवणाख्येन संयुक्तां भोजनोत्तरकालं सायं शिष्यो भक्षयेत् । जाठरमग्नि बुद्धि त्विषा जनयति । अग्नि पात्वेन स्वरवर्ण सौष्ठवं भवतीति ॥६॥

**कृत्वा चावश्यकान्धर्मान् जाठरं पर्युपास्यच ।**
**पीत्वा धूमं घृतं चैव शुचिर्भूत्वा ततो वदेत् ॥७॥**

अवश्यं सदाभवतीत्यावश्यकः दन्तधावनस्नानसन्ध्योपास-नादयः, पूर्वं जठरं पर्युपास्यमूत्रपुरीषोत्सर्गं कृत्वाऽन्यच्च शुचित्वे

शब्दस्पर्शादौ धूमं घृतप्राशनं कृत्वा स्नानादिना शुचिर्भूत्वा ततोवदेत् मंत्राध्ययनं कुर्यात् ॥ ७ ॥

**मन्द्रेणोपक्रमेत्पूर्वं सर्वशाखास्वयं विधिः ।**
**सप्तमंत्राननतिक्रम्य यथेष्टां वाचमुत्सृजेत् ॥८॥**
**न तां समीरयेद् वाचं या प्राणमुपरोधयेत् ।**

मन्त्रसप्तकमुपांशु पठित्वा यथेष्टां वाचं मन्द्रादि स्वरेणोच्चारयेत् । प्राणोपरोधमुच्चैः शब्दोच्चारणं विशेषतः प्रातर्न कार्यमित्यर्थः ॥ ८ ॥

**प्राणानामुपरोधेन वैस्वर्यं चोपजायते ।**
**स्वरव्यञ्जन माधुर्यं लुप्यते नात्र संशयः ॥९॥**

वर्णानां माधुर्यंयत् स्वाभाविक तन्निवर्तत इति । अप्रवीणस्यासामयिकस्योपाध्यायस्य सकाशान्नाधिगन्तव्यं, प्रतिष्ठिताध्ययनं कार्यमित्याह ॥ ९ ॥

**कुतीर्थादागतं दग्धवमपवर्णैश्च भक्षितम् ।**
**न तस्य परिमोक्षोऽस्ति पापाहेरिवकिल्बिषात् ॥१०॥**

यथा कुतीर्थाद् वस्थानाज्जलौघेनानीतं विषम्, अपवर्णैर्दुर्ज्जनैः दुष्कृतिभिर्भक्षितं स्यात्, पापरूपात् सर्पान्निर्गताद्विषाद्यथा मुक्तिर्नभवति एवं कुतीर्थादुपाध्यायादागतमध्ययनमपवर्णैर्मुखैर्भक्षितमधीतं, तस्मादध्ययनात् पापिष्ठादुपाध्याया-

दागताय न परिमोक्षो भवति न कुसंस्कारो निवर्तत इत्यर्थः ।। १०।।

**सुतीर्थादागतं जग्धं [1]स्वाम्नातं सुप्रतिष्ठितम् ।**
**सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्मराजते ।।११।।**

उपाध्यायात् सुतीर्थात् शोभनादागतमधीतं उपाध्यायस्य सम्यगाम्नात शिष्येषुच प्रतिष्ठितमभ्यस्तं स्थितम् । अप्रतिष्ठितेन सुस्वरेणापि प्रयुक्तं न राजत इत्यर्थः ।।११।।

विकृतमुखानां पाठो न शोभत इत्याह–

**न करालो न लम्बोष्ठो न च[2] सर्वानुनासिकः ।**
**गद्गदो वद्धजिह्वश्च प्रयोगान् वक्तुमर्हति ।।१२।।**

नासाक्षिकर्णादिना विकृतः करालः । नासिकायाः प्राधान्येन यश्च शब्दानुच्चारयति स सर्वानुनासिकः । कण्ठ प्राधान्येन शब्दोच्चारणाद् गद्गदो भवति । वाक् स्तम्भेन वद्ध जिह्वः । प्रयुज्यत इति प्रयोगान् छन्दान्न वक्तुमर्हतीति ।। १२ ।।

अदुष्टकरणः संयतचित्तः शोभनं पठतीत्याह–

**एकचित्तो निरुद्भ्रान्तस्तान[3] गान विवर्जितः ।**
**सतु वर्णान्प्रयुञ्जीत दन्तोष्ठं यस्य शोभनम् ।।१३।।**

---

१–स्वाम्नायमित्यपि पाठः । २–नाव्यक्तमिति पाठः । ३–निरुन्नतिस्तान्त गान विवर्जितः इत्यपि पाठः ।

स्वाध्याय विषयं चित्तं यस्य स एक चित्तः—अप्रगल्भत्वात् भ्रान्तिरहितः, अतिविलम्बित–शब्दोच्चारणाभावात्तान्तगान विवर्जितः, अविकृत दन्तोष्ठत्वाद् रमणीयशब्द उच्चरति ॥१३॥ अहंकार रहितानां विद्याप्रवर्त्तत इत्याह ।

**पञ्च विद्यां न गृह्णन्ति चण्डाः स्तब्धाश्च ये नराः ।**
**अलसाःश्वास रोगाश्च येषां चाविस्तृतं मनः ॥१४॥**

साहंकारः कोपप्रधानि नो माध्यायादीनाम न प्रवृत्ति भजते चाण्डास्तच्चातुर्येणाध्यापने अप्रवृतः स्तब्धउक्तमपि कदाऽपि तावन्तो वुध्यते अलसो मानसादि करणानामवधारणे अपाटवान् न रोगः अरोगः सर्वकाल रोगपरिदुष्टो न रोगः विसृतं चञ्चलं मनः ॥ १४ ॥ त्वराचाध्ययने न कर्त्तव्येत्युच्यते ।

**शनैर्विद्या शनैरर्था नारोहेत्पर्वतं शनैः ।**
**शनैरध्वसु वर्तेत योजनानां परं व्रजेत् ॥१५॥**

अर्थार्ज्जनमध्वगमनं पर्वतारोहणं वाऽत्वरस्य यथा सम्यग् भवति तथा विद्याशनैर्यथावदभिनिवर्तते ग्रहरहस्य योजनं भवति। उच्चैरुच्चार्यमाण शब्दः पश्चाद संवदता विच्छिद्यमानो विरम्यमानमुत्पादयतीत्याह ॥ १५ ॥

**योजनानां सहस्रंतु [1]शनैर्याति पिपीलिका ।**
**अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥१६॥**

१–सहस्राणि इत्यपिपाठान्तरम् ।

अत्र परेणासामर्थ्येन व्यापारः शोभनोनिवर्तते नच बहुवा-
लताऽपि कृतं शोभनं भवतीत्याह ॥१६॥

**नहि पार्ष्णिहता वाणी प्रयोगान्वक्तुमर्हति ।**
**बधिरस्येव तल्पस्था विदग्धा वामलोचना ॥१७॥**

अतएव वेति पुरुषैरति समयोचितं व्यक्तंगानं कामिन्यः । यथा वेरत्वमापद्यते एवमुच्चैरुच्चार्यमाणा पश्चाद्विच्छिन्ना वाणी सर्वस्योद्वेगंजनयति । पार्ष्णिः पादस्य पश्चिमो भागो, वधिरस्य तल्पस्था एकस्मिन् शयने स्थिता विदग्धा सुरते काम शास्त्रे प्रवीणा वामलोचना रमणीयलोचना यथा रति प्रयोगान् करोति एवं पश्चाद्विच्छिन्नात् प्रयोक्तव्या ॥१७॥ उपांशु त्वरितं चैवविभ्रंस्यतेंऽवाधितं सहस्त्रकृत्वोऽपि न निर्मलता-मासादयतीति तथा न गणयितव्यमित्याह ।

**उपांशु त्वरितं चैव योऽधीतेविभ्रसन्निव ।**
**अपि रूप सहस्त्रेषु सन्देहे [1]त्वेव वर्तते ॥१८॥**

रूपं शब्दोच्चारणं तद्विषयेसन्देहेष्वास्ते ॥१८॥ प्रणवेनाचार्यादध्ययनं कार्यं न पुस्तकादिना शुभं मन्त्रस्वरूपं भवतीत्याह ।

**पुस्तक प्रत्ययाधीतं नाधीतं गुरु सन्निधौ ।**
**राजते न सभामध्ये जारगर्भा इव स्त्रियः ॥१९॥**

---

१—ष्वेव इत्यपिपाठः ।

जाराद्गर्भो यासां ता यथा न भ्राजंते । एवं दुष्टादागमादध्ययनं ॥ १९ ॥ अप्राज्ञेनापि मंत्रपरेणाध्ययनादौ भवितव्यमित्युच्यते ।

**अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्यतु सञ्चयम् ।**
**अबन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥२०॥**

अञ्जन पर्वतस्य व्यये क्रियमाणोऽपिक्षयो दृश्यते, वल्मीकस्य च पिपीकिलाभिरपि सञ्चयः क्रियते । एवं तत्वं क्रियमाणस्य । सञ्चितश्चित्ता पाटवः यतो नावगम्यं । अतोऽध्ययनादिभिः शास्त्रार्थैरवंध्यमशून्यंकार्यम् ॥ २०॥ अबलोऽपि यत्नवानर्थं साधयति । नतु बलवान्रहितयत्न इति पूर्वोक्तबिदावर्णानुच्यते ।

**यत्कीटैः पांशुभिः श्लक्ष्णैर्वल्मीकः क्रियते महान् ।**
**न तत्र बलसामर्थ्यमुद्योगस्तत्र कारणम् ॥२१॥**

विद्याभ्यासः सर्वदा कर्त्तव्यो यथाऽधीतस्यनाशो न भवतीत्याह ।

**सहस्रगुणिता विद्या शतशः परिकीर्तिता ।**
**आगमिष्यति जिह्वाग्रे स्थलान्निम्नमिवोदकम् ॥२२॥**

गुणिता अभ्यस्ता परिवर्तिता । शिष्याणां परिकीर्तिता प्रतिपादिता प्रयत्नेन सुखेन परिवर्तते आगमिष्यति जिह्वाग्रे स्थलान्निम्न मुन्नतात्प्रदेशान्निम्न स्थानं यथा जलंगच्छति ॥२२॥

विद्यार्थिना प्रहरद्वयं हेमन्ते प्रहरद्वयं च वसन्तादौ छात्रोऽनुशीलनीय इत्याह ।

**हयानामिव जात्यानामर्धरात्रार्ध शायिनाम् ।**
**नहि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥२३॥**

अन्नपान नारी व्यसनं वर्ज्जनीयम् । दूर गमने च यज्ञः श्रावणीय इत्याह ।

**न भोजन विलम्वी स्यान्नच नाशन बन्धनः ।**
**सुदूरमपि विद्यार्थी व्रजेद्गरुडहंसवत् ॥२४॥**

**अहेरिव गणाद्भीतः सौहृद्यान्नरकादिव ।**
**राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥२५॥**

**न शठाः प्राप्नुवन्त्यर्थान्न क्लीवा न च मानिनः ।**
**नच लोक रवाद्भीता नच श्वः श्वः प्रतीक्षकाः ॥२६॥**

अलसो विद्याधनादिकं न साधयति क्लीवो नपुंसकश्च पुत्रादिकं न लभते, मानी चाति तुष्टातिशीलो न विद्या भाजनः नाऽयं विद्यामासादयतीति, लोक प्रवादाद्भीतो न विद्यां गृह्णाति अथ प्रातः पुनः प्रातरिति काल प्रतीक्षको न विद्यामाप्यो भवति ॥२६॥

यथा भूतलादुदकं महता खननेन लभ्यते एवं पौनः पुन्येन गुरु सेवनाद् संदिग्धौ पाठवोधौ प्राप्येते इत्याह ।

यथा खनन्खनित्रेण भूतले वारि विन्दति ।
एवं गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥२७॥

शुश्रूषा रहिताविद्या यद्यपि मेधा गुणैः समुपयाति ।
वन्ध्येव यौवनवती न तस्य विद्याफलवती भवति ॥२८॥

द्यूतं पुस्तक वाद्यं च नाटकेषु च सक्तिका ।
स्त्रियस्तन्द्राच निद्राच विद्याविघ्नकराणि षट् ॥२९॥

स्थान करणैरपीडयता वर्णं स्फुटमुच्चारयता स्वाध्यायादि कर्त्तव्यं, ब्रह्मलोक प्राप्त्यर्थमितिरूपावधारणार्थं शिक्षेति शास्त्रान्ते प्रतिपाद्यते ।

यथा व्याघ्री हरेत्पुत्रान् दंष्ट्राभिर्नच पीडयेत् ।
भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥३०॥

एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ।
सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥३१॥

१गुरु शुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्ययाविद्या चतुर्थं नोपलभ्यते ॥३२॥

---

१–इत्यधिकं पद्यं क्वचिदुपलभ्यते । २–स्वाध्यायेवा ।

शुनी व्याघ्री विडाली च चिरजाता पत्यान् दन्तैरपीडयन्ती अपत्यान्नयति यदि न सम्यग् प्रतिगृह्णाति तदा पतन्ति । यदि वाऽति वलेन गृह्णाति तदा भेद उपघातोऽपत्यानां भवतीत्येवं वर्णोच्चारणं कार्यम् । व्यक्ताः स्फुटाः प्रयोगास्तु जपे २स्वसाध्येऽध्यापने च । इति द्वितीयस्याष्टमी कण्डिका । इति श्री भट्टशोभाकर विरचिते नारदीय शिक्षाविवरणे द्वितीयः प्रपाठकः समाप्तः ।

–इति शिक्षा भाष्यं समाप्तम्–

---

